॥ अर्हम् ॥

# कलिकालसर्वज्ञश्रीहेमचन्द्राचार्यविरचिता

# ❋ स्तोत्रत्रयी ❋

( सकलार्हत्स्तोत्र - वीरजिनस्तोत्र - महादेवस्तोत्राणि । )




पन्यासश्रीकीर्तिचन्द्रविजयगणिविरचित-

कीर्तिकलाव्याख्याविभूषिता ।

सुणाव निवासी

धर्मप्रेमी श्रेष्ठीवर्य खीमचंदभाईनासुपुत्रो

नगीनदास तेमना धर्मपत्नी कमलाबेन

कान्तिलाल तेमना धर्मपत्नी शारदाबेन

तथा

खीमचंदभाईनावडिलबन्धुनासुपुत्र

मणिलाल चुनीलालना धर्मपत्नी भुरीबेन

उपरोक्त त्रणेना धर्मपत्नीओनी अट्ठाइतपनी

तपश्चर्या निमित्ते सादर सप्रेम

स्वाध्यायार्थे भेट ।



आचार्य श्रीविजयकस्तूरसूरीश्वरजी महाराज साहेब

प पू आचार्य श्रीविजयकस्तूरसूरिशिष्यरत्न



पन्यासप्रवर श्रीकीर्तिचन्द्रविजयजी गणिवर

॥ अर्हम् ॥

श्रीविजय - नेमि - विज्ञान - कस्तूरसूरिसद्गुरुभ्यो नमः

कलिकालसर्वज्ञश्रीहेमचन्द्राचार्यविरचिता-

# ❀ स्तोत्रत्रयी ❀

( सकलाऽर्हत्स्तोत्र - वीरजिनस्तोत्र - महादेवस्तोत्राणि । )

तपोगच्छाधिपतिशासनसम्राट्कदम्बगिरिप्रमृत्यनेकतीर्थोद्धारकबालब्रह्म-
चार्याचार्यवर्यश्रीद्विजयनेमिसूरीश्वर-पट्टालङ्कारसमयज्ञशान्तमूर्त्या-
चार्यवर्यश्रीमद्विजयविज्ञानसूरिश्वर-पट्टधर-सिद्धान्तमहोदधि-
प्राकृतविद्विशारदाचार्यवर्यश्रीविजयकस्तूरसूरीश्वरशिष्य-
पन्यासश्रीकीर्तिचन्द्रविजयगणिवरविरचित-
कीर्तिकलाव्याख्याविभूषिता ।

सम्पादक .—

विक्रम सवत् - २०१६ मुनि श्रीअजितचन्द्रविजयः ।

# प्रकाशकीय

प. पूज्य पंन्यासप्रवर श्रीकीर्तिचन्द्रविजयगणिवर महाराजसे रचित कीर्तिकलानामक संस्कृत तथा हिन्दीव्याख्यासहित—कलिकालसर्वज्ञ श्रीहेमचन्द्राचार्यनिर्मित-स्तोत्रोंमें, द्वात्रिंशिकाद्वयी (अयोगव्यवच्छेदद्वात्रिंशिका तथा अन्ययोगव्यवच्छेदद्वात्रिंशिका) तथा वीतरागस्तवके चार पुस्तकोंमें प्रकाशन हो चुके हैं। जिसका जैन समाज तथा अन्यसभी अच्छा स्वागत तथा आदर किया गया है। एवं विद्वानोंने उनकी मुक्तकंठसे प्रशंसाकी है।

प्रस्तुत स्तोत्रत्रयी नामके दो ग्रन्थोंके प्रकाशनमें उक्त पंन्यास महाराजके द्वारा निर्मित कीर्तिकलानामकी संस्कृतव्याख्या तथा हिन्दीभाषानुवादसहित उक्त आचार्यमहाराजके तीन सकलार्हत्स्तोत्र वीरजिनस्तोत्र महादेवस्तोत्र—स्तोत्रोंका समावेश किया गया है। जैसे उक्त तीनों स्तोत्रोंका संस्कृत तथा हिन्दीव्याख्यासहित एक पुस्तक तथा केवल हिन्दीव्याख्यासहित दूसरी पुस्तक।

सकलार्हत्स्तोत्र उक्त आचार्यमहाराजविरचित प्रसिद्ध महान् ग्रन्थ त्रिषष्टिशलाकापुरुषचरितका मंगलाचरण है। इसका जैन समाजमें क्या स्थान है इस विषयमें कुछ कहना इस स्तोत्रकी प्रसिद्धि एवं आदर तथा प्रतिक्रमणक्रियामें अनिवार्यरूपसे पाठक्रमके समावेशको देखते हुए—एक धृष्टता जैसे ही होगी। इस स्तोत्रके

संस्कृत, हिन्दी तथा गुजराती व्याख्यासहित अनेक प्रकाशन अन्यत्र हो चुके हैं। फिरभी कीर्तिकलव्याख्याकी अपनी विलक्षणशैली, शब्द-प्रकरण आदिको ध्यानमें रखते हुए पदार्थ तथा भावार्थका स्पष्टीकरण, चमत्कारिक लगे, ऐसे मनोग्राह्य अर्थोंका विश्लेषण तथा कर्त्ताके भावोका प्रामाणिकरूपसे अधिकाधिक अनुसरण-आदि सभी विशिष्टतायें द्वात्रिंशिकाद्वयी तथा वीतरागस्तवके जैसे ही इस पुस्तक में भी अपने उत्कृष्टरूपसे विद्यमान हैं।

वीरजिनस्तोत्र उक्त आचार्यमहाराजविरचितप्रसिद्ध परिशिष्ट-पर्वका मगलाचरण है। तथा इस स्तोत्रका सकलार्हत्स्तोत्रके साथ ही वड़े आदर एव भक्तिसे पाठ किया जाता है—यह विदित है।

महादेवस्तोत्र, प्राय अतिसरल समझे जानेके कारण आज तक किसीभी व्याख्याताओंको आकृष्ट नही कर सकाथा-ऐसी सम्भावनाकी जा सकती है। किन्तु यहा यह विशेषत ध्यान देने योग्य है कि-इस स्तोत्रके कितने श्लोक अत्यन्त प्रसिद्ध एवं जैन समाजकी भावनाओंको अक्षरदेहमें अत्यन्तसरल एवं प्रभावोत्पादक रीतिसे व्यक्तकरते हैं। जैसे-इस स्तोत्रके अन्तिमश्लोक। यह श्लोक अत्यन्त प्रसिद्ध है। यह इस वातका प्रमाण है कि जैन विचारधारा व्यक्ति नहीं, किन्तु गुणको प्राधान्य देती है। इस स्तोत्रमें परमात्मा, अन्तरात्मा तथा वाह्यात्माका स्वरूप स्पष्टरूपसे वताया गया है। यहा वताये अर्थको देखते हुए ऐसा लगता है कि अन्यग्रन्थके टीकाकारो के वाह्यात्माकापदार्थ अनुमान पर आधारित है। यह, सरल जानकर

इस स्तोत्रकी पठन पाठनमें उपेक्षाका परिणाम है ऐसा स्पष्ट परिलक्षित होता है। तथा इस स्तोत्रकी कीर्तिकलाव्याख्याके अवलोकनके बाद यह प्रगट ही ज्ञात होता है कि शब्दकी दृष्टिसे सरल लगतेहुए भी यह स्तोत्र मर्मसे अत्यन्त सारगर्भित है। इसलिये कीर्तिकलाव्याख्यासे इसस्तोत्रका महत्त्व प्रकाशमें आया है-ऐसा कहना कोई अत्युक्ति नहीं। मैं अपनी योग्यताकी मर्यादाओंसे परिचित हूं। फिरभी इतनातो अवश्य ही समझता हूं तथा कह सकता हूं कि कीर्तिकलाव्याख्या सरल, सारगर्भित, उपयोगी एवं प्रशंसनीय है इतना ही नहीं किन्तु इससे चिरकालसे अपेक्षित तथा एक अत्यन्त आवश्यक व्याख्याकी पूर्ति हुई है।

कीर्तिकलासहित अन्य प्रकाशनोंके जैसे ही इस प्रस्तुत प्रकाशनमेंभी श्लोकोंके हिन्दीमें भावार्थमदिये गये हैं। तथा स्पष्ट रूपसे प्रत्येक पदार्थका पृथक् ज्ञान हो और इस प्रकार वाक्यके संस्कृत शब्दोंके अर्थज्ञानमेंभी उपयोगी हो इस दृष्टिसे प्रत्येक पदोंका अर्थ तथा समासवाले पदोंका पृथक्से सङ्कलित अर्थभी दिये गये हैं, जिससे विद्यार्थियों एवं सन्दर्भके जिज्ञासुओंकेलिये इस प्रकाशनकी उपयोगितामें वृद्धि हुई है। जिससे बिना किसीके सहायताके ही श्लोकका अर्थ समझा तथा समझाया जा सकता है। यह बात पुस्तक देखनेके बाद स्वयं ही प्रगट हो जाती है।

इस पुस्तककी इन सब विशेषताओंको देखते हुए इसके प्रकाशनका दुर्लभ सुअवसर प्राप्त होनेसे मेरे लिये कृतज्ञताका तथा

एक शुभकार्यमें भागलेनेके आनन्दका अनुभव होना सकारण ही है। पूर्वमेंभी कीर्तिकला सहित 'द्वात्रिंशिकाद्वयी' तथा कीर्तिकला सस्कृत व्याख्यासहित 'वीतरागस्तव' के प्रकाशनका अमूल्य सुअवसर मुझे प्राप्त हुआ था। वाचकोंके द्वारा उसका आदर देखकर इस प्रकाशनके कार्यभारको द्विगुण उत्साहसे वहन करनेमें मै समर्थ हुआ हूं, जो स्वाभाविक ही है।

यहा पर. जिनकी अनुकरणीय एव प्रशसनीय आर्थिक सहायताके बल पर इस 'स्तोत्रत्रयी' का प्रकाशन सुचारुरूपसे सम्भव हो सका, उन श्रीखीमचन्दभाई जेसगभाईका आभार सहित उल्लेख करना अप्रासंगिक नही समझा जायगा। श्रीखीमचन्द भाई एक धार्मिक प्रकृति, शुभकार्योंमें उत्साहसे भाग लेनेवाले, सफल व्यापारी तथा अत्यन्त मिलनसार हैं। आपका उपरोक्त गुणोके कारण समाजमें एक विशिष्टस्थान है, जो स्पृहणीय माना जाता है। आप तीसवर्षकी अल्प अवस्थामें ही एक साहसिक व्यापारी होनेके कारण व्यापारके उद्देशसे आफ्रीका गये थे। तथा सहज धार्मिक प्रकृति होनेके कारण आपने सुणावमें मन्दिर तथा उपाश्रयका निर्माणकर प्रचुर पुण्य एव सुयशका लाभ किया है। आप शुभनाम 'नगीनदास' तथा कान्तिलाल इन दो सुपुत्रों तथा अन्य परिवारोंसे भरे पूरे हैं। तथा आपके ही चाचा श्रीमणिलाल चुनीलाल भाई है। जो स्वभावत ही धार्मिक उत्साहवाले, सज्जन तथा आकर्षक व्यक्तित्व सम्पन्न है। इस प्रकार इन दोनों भाईयोका सम्पूर्ण परिवार ही धार्मिक प्रवृत्तियोंके

अनुरागी तथा उनमें सोत्साह भागलेनेवाला है। इस प्रकाशनमें आर्थिक सहायता देकर पूर्ण करनेकेलिये मैं इनकेलिये सहर्ष अपनी कृतज्ञता प्रगट करता हूं।

यहां वाचकोंसे सानुनय निवेदन है कि यद्यपि प्रूफ संशोधन आदिमें पूरी सावधानी रखी गयी है फिरभी दृष्टि तथा मुद्रण दोषसे जो अशुद्धि रह गयी है—उसकेलिये सहानुभूति पूर्वक क्षमा करेंगे। तथा सायमें दिये गये शुद्धिपत्रका यथावसर उपयोग करेंगे।

अन्तमें इस आशा तथा विश्वासके साथ कि वाचक तथा अध्यापक इस स्तोत्रत्रयीके अध्ययन तथा अध्यापनके द्वारा यथा सम्भव अवश्य ही अधिकाधिक समानन्दित होंगे, तथा इस प्रकार श्रीवीतराग जिनेश्वरकी भक्तिसे अपनी आत्माको पवित्र करेंगे इति।

भवदीय —
माईलाल, अम्बालाल,
पेटलादवाला

# ॥ शुद्धिपत्रम् ॥

## सकलार्हत्स्तोत्र कीर्तिकलासस्कृत व्यारव्यासहितम् ।

| पृ० | प० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १ | ७ | भूर्मि | भूमी |
| २ | ११ | भुवर्मनु | भुवोमनु |
| ३ | १७ | भूस | भूस् |
| ४ | २ | भुवस | भुवस् |
| ४ | ११ | स्तौंति | स्तौति |
| ९ | ९ | लोत्पत्य | लोत्पत्त्य |
| १२ | १८ | तिक्ष्णी | तीक्ष्णी |
| १४ | ४ | द्यति | द्युति. |
| १५ | १ | ( भद्रमित्यनन्तरम्–श्रियमितिपाठे तु अन्तरङ्गारिमथनसम्पद-मित्यर्थ , तस्य एव प्रकृतत्वादि वोध्यमि–त्यधिको वोध्य· ।) | |
| १५ | ३ | शिवपोप | शिवश्रीपोप |
| १६ | १५ | व | व |
| २० | १६ | मूलति | मूल्यति |
| २१ | ११ | निवत्तन | निवर्त्तन |
| ३२ | १ | दुप | द्रूप |

## महादेवस्तोत्र कीर्तिकलासस्कृतव्यारव्यासहितम् ।

| पृ० | प० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ८ | १४ | नार्था | नर्था |
| ८ | १५ | नन्तर | नन्तर |
| २७ | १ | त्रय | त्र्रय |
| २८ | १५ | पेद्येत | पद्येत |
| २९ | १ | क्रिया | क्रिया |
| ३३ | ७ | त्रिह | त्रिह्न |
| ३४ | १६ | एवैक | एवैक |

॥ अर्हम् ॥

श्रीविजय-नेमि-विज्ञान-कस्तूर-सूरिसद्‌गुरुभ्यो नमः ।

# कलिकालसर्वज्ञश्रीहेमचन्द्राचार्यविरचितं

# ॥ सकलाऽर्हत्स्तोत्रम् ॥

— * —

सकलाऽर्हत्प्रतिष्ठानमधिष्ठान शिवश्रिय ।
भुर्भुव स्वस्त्रयीशानमार्हन्त्य प्रणिदध्महे ॥ १ ॥

नामाऽऽकृतिद्रव्यभावै पुनतस्त्रिजगज्जनम् ।
क्षेत्रे काले च सर्वस्मिन्नर्हत समुपास्महे ॥ २ ॥

आदिम पृथिवीनाथमादिम निष्परिग्रहम् ।
आदिम तीर्थनाथ च ऋषभस्वामिन स्तुम. ॥ ३ ॥

अर्हन्तमजित विश्वकमलाकरभास्करम् ।
अम्लानकेवलाऽऽदर्शसङ्क्रान्तजगत स्तुवे ॥ ४ ॥

विश्वभव्यजनाऽऽरामकुल्यातुल्या जयन्ति ता ।
देशनासमये वाच श्रीसम्भवजगत्पते ॥ ५ ॥

अनेकान्तमताऽम्भोधिसमुल्लासनचन्द्रमा ।
दद्यादमन्दमानन्द भगवानभिनन्दन ॥ ६ ॥

द्युसत्किरीटशाणाग्रोत्तेजिताङ्घ्रिनखावलि ।
भगवान् सुमतिस्वामी तनोत्वभिमतानि व ॥ ७ ॥

पद्मप्रभप्रभोर्देहभासः पुष्णन्तु वः श्रियम् ।
अन्तरङ्गारिमथने कोपाटोपादिवारुणाः ॥ ८ ॥

श्रीसुपार्श्वजिनेन्द्राय महेन्द्रमहिताङ्घ्रये ।
नमश्चतुर्वर्णसङ्घगगनाऽऽभोगभास्वते ॥ ९ ॥

चन्द्रप्रभप्रभोश्चन्द्रमरीचिनिचयोज्ज्वला ।
मूर्तिर्मूर्तसितध्याननिर्मितेव श्रियेऽस्तु वः ॥ १० ॥

करामलकवद्विश्वं कलयन् केवलश्रिया ।
अचिन्त्यमाहात्म्यनिधिः सुविधिर्बोधयेऽस्तु वः ॥ ११ ॥

सत्त्वानां परमानन्दकन्दोद्भेदनवाऽम्बुदः ।
स्याद्वादाऽमृतनिःस्यन्दी शीतलः पातु वो जिनः ॥ १२ ॥

भवरोगार्तजन्तूनामगदङ्कारदर्शनः ।
निःश्रेयसश्रीरमणः श्रेयांसः श्रेयसेऽस्तु वः ॥ १३ ॥

विश्वोपकारकीभूततीर्थकृत्कर्मनिर्मितिः ।
सुरासुरनरैः पूज्यो वासुपूज्यः पुनातु वः ॥ १४ ॥

विमलस्वामिनो वाचः कतकक्षोदसोदराः ।
जयन्ति त्रिजगच्चेतोजलनैर्मल्यहेतवः ॥ १५ ॥

स्वयम्भूरमणस्पर्धिकरुणारसवारिणा ।
अनन्तजिदनन्तां वः प्रयच्छतु सुखश्रियम् ॥ १६ ॥

कल्पद्रुमसधर्माणमिष्टप्राप्तौ शरीरिणाम् ।
चतुर्धाधर्मदेष्टारं धर्मनाथमुपास्महे ॥ १७ ॥

सुधासोदरवाग्ज्योत्स्नानिर्मलीकृतदिङ्मुख ।
मृगलक्ष्मा तम शान्त्यै शान्तिनाथजिनोऽस्तु व. ॥ १८ ॥

श्रीकुन्थुनाथो भगवान् सनाथोऽतिशयर्द्धिभि· ।
सुरासुरनृनाथानामेकनाथोऽस्तु व. श्रिये ॥ १९ ॥

अरनाथ स भगवाश्चतुर्थोऽरनभोरवि ।
चतुर्थपुरुषार्थश्रीविलास वितनोतु वः ॥ २० ॥

सुरासुरनराधीशमयूरनववारिदम् ।
कमद्रून्मूलने हस्तिमल्ल मल्लिमभिष्टुम ॥ २१ ॥

जगन्महामोहनिद्राप्रत्यूषसमयोपमम् ।
मुनिसुव्रतनाथस्य देशनावचन स्तुमः ॥ २२ ॥

लुठन्तो नमता मूर्ध्नि निर्मलीकारकारणम् ।
वारिप्लवा इव नमे पान्तु पादनखाशव· ॥ २३ ॥

यदुवंशसमुद्रेन्दु कर्मकक्षहुताशन ।
अरिष्टनेमिर्भगवान् भूयाद्वोऽरिष्टनाशनः ॥ २४ ॥

✓ कमठे धरणेन्द्रे च स्वोचित कर्म कुर्वति ।
प्रभुस्तुल्यमनोवृत्ति पार्श्वनाथ श्रियेऽस्तु व· ॥ २५ ॥

✓ कृताऽपराधेऽपि जने कृपामन्थरतारयोः ।
ईषद्बाष्पार्द्रयोर्भद्र श्रीवीरजिननेत्रयो ॥ २६ ॥

इति सकलाऽर्हत्स्तोत्रम् ।

# श्रीवीरजिनस्तोत्रम् ॥

श्रीमते वीरनाथाय सनाथायाऽद्भुतश्रिया ।
महानन्दसरोराजमरालायाऽर्हते नमः ॥ १ ॥

सर्वेषां वेधसामाद्यमादिमं परमेष्ठिनाम् ।
देवाऽधिदेवं सर्वज्ञं श्रीवीरं प्रणिदध्महे ॥ २ ॥

कल्याणपादपाऽऽरामं श्रुतगङ्गाहिमाचलम् ।
विश्वाऽम्भोजरविं देवं वन्दे श्रीज्ञातनन्दनम् ॥ ३ ॥

पान्तु वः श्रीमहावीरस्वामिनो देशनागिरः ।
भव्यानामान्तरमलप्रक्षालनजलोपमाः ॥ ४ ॥

इति कलिकालसर्वज्ञ श्रीहेमचन्द्राचार्यविरचितं
श्रीवीरजिनस्तोत्रम् ।



|| अर्हम् ||

श्रीविजय-नेमि-विज्ञान-कस्तूर-सूरिसद्गुरुभ्यो नमः

# कलिकालसर्वज्ञश्रीहेमचन्द्राचार्यविरचितं

# || श्रीमहादेवस्तोत्रम् ||



प्रशान्त दर्शन यस्य सर्वभूताऽभयप्रदम् ।
मङ्गल्यं च प्रशस्त च शिवस्तेन विभाव्यते ॥ १ ॥

महत्त्वादीश्वरत्वाच्च यो महेश्वरता गतः ।
रागद्वेषविनिर्मुक्त वन्देऽहं तं महेश्वरम् ॥ २ ॥

महाज्ञान भवेद्यस्य लोकालोकप्रकाशकम् ।
महादया-दम-ध्यान महादेव स उच्यते ॥ ३ ॥

महान्तस्तस्करा ये तु तिष्ठन्त स्वशरीरके ।
निर्जिता येन देवेन महादेव. स उच्यते ॥ ४ ॥

रागद्वेषौ महामल्लौ दुर्जयौ येन निर्जितौ ।
महादेवं तु तं मन्ये शेषा वै नामधारका ॥ ५ ॥

शब्दमात्रो महादेवो लौकिकाना मते मत ।
शब्दतो गुणतश्चैवाऽर्थतोऽपि जिनशासने ॥ ६ ॥

शक्तितो व्यक्तितश्चैव विज्ञानाल्लक्षणात्तथा ।
मोहजाल हतं येन महादेव स उच्यते ॥ ७ ॥

नमोऽस्तु ते महादेव ! महामदविवर्जित ! ।
महालोभविनिर्मुक्त ! महागुणसमन्वित ! ॥ ८ ॥

महारागो महाद्वेषो महामोहस्तथैव च ।
कषायश्च हतो येन महादेवः स उच्यते ॥ ९ ॥

महाकामो जितो येन महाभयविवर्जित ।
महाव्रतोपदेशी च महादेव स उच्यते ॥ १० ॥

महाक्रोधो महामानो महामाया महामद ।
महालोभो हतो येन महादेवः स उच्यते ॥ ११ ॥

महानन्ददये यस्य महाज्ञानी महातपा ।
महायोगी महामौनी महादेव स उच्यते ॥ १२ ॥

महावीर्यं महाधैर्यं महाशीलं महागुण ।
महामृदुक्षमा यस्य महादेव स उच्यते ॥ १३ ॥

स्वयम्भूतं यतो ज्ञानं लोकालोकप्रकाशकम् ।
अनन्तवीर्यचारित्रं स्वयम्भूः सोऽभिधीयते ॥ १४ ॥

शिवो यस्माज्जिन प्रोक्त. शङ्करश्च प्रकीर्तित ।
कायोत्सर्गी च पर्यङ्की स्त्रीशस्त्रादिविवर्जितः ॥ १५ ॥

साकारोऽपि ह्यनाकारो मूर्तोऽमूर्तस्तथैव च ।
परमात्मा च बाह्यात्मा सोऽन्तरात्मा तथैव च ॥ १६ ॥

दर्शनज्ञानयोगेन परमात्मायमव्यय ।
परा क्षान्तिरहिंसा च परमात्मा स उच्यते ॥ १७ ॥

परमात्मा सिद्धिमाप्तौ चाह्यात्मा तु भवान्तरे ।
अन्तरात्मा भवेद्देहे इत्येप त्रिविध शिव ॥ १८ ॥

सकलो दोपसम्पूर्णो निष्कलो दोपवर्जित. ।
पञ्चदेहविनिर्मुक्त सम्प्राप्त. परमं पदम् ॥ १९ ॥

एकमूर्त्तिस्त्रयो भागा ब्रह्मविष्णुमहेश्वरा ।
त एव च पुनरुक्ता ज्ञानचारित्रदर्शनात् ॥ २० ॥

एकमूर्त्तिस्त्रयो भागा ब्रह्मविष्णुमहेश्वरा· ।
परस्पर विभिन्नानामेकमूर्त्ति कथ भवेत् ? ॥ २१ ॥

कार्यं विष्णु क्रिया ब्रह्मा कारण तु महेश्वर, ।
कार्यकारणसम्पन्ना एकमूर्त्ति कथ भवेत् ? ॥ २२ ॥

प्रजापतिसुतो ब्रह्मा माता पद्मावती स्मृता ।
अभिजिज्जन्मनक्षत्रमेकमूर्त्ति कथ भवेत् ? ॥ २३ ॥

वसुदेवसुतो विष्णुर्माता च देवकी स्मृता ।
रोहिणी जन्मनक्षत्रमेकमूर्त्ति कथं भवेत् ? ॥ २४ ॥

पेढालस्य सुतो रुद्रो माता च सत्यकी स्मृता ।
मूल च जन्मनक्षत्रमेकमूर्त्ति· कथ भवेत् ? ॥ २५ ॥

रक्तवर्णो भवेद्ब्रह्मा श्वेतवर्णो महेश्वर. ।
कृष्णवर्णो भवेद्विष्णुरेकमूर्त्ति कथ भवेत् ? ॥ २६ ॥

अक्षसूत्री भवेद्ब्रह्मा द्वितीयः शूलधारक ।
तृतीय शङ्खचक्राङ्क एकमूर्त्ति कथ भवेत् ? ॥ २७ ॥

चतुर्मुखो भवेद्ब्रह्मा त्रिनेत्रोऽथ महेश्वर ।
चतुर्भुजो भवेद्विष्णुरेकमूर्तिः कथं भवेत् ? ॥ २८ ॥

मथुरायां जातो ब्रह्मा, राजगृहे महेश्वर. ।
द्वारावत्यामभूद्विष्णुरेकमूर्तिः कथं भवेत् ? ॥ २९ ॥

हंसयानो भवेद्ब्रह्मा वृषयानो महेश्वर ।
तार्क्ष्ययानो भवेद्विष्णुरेकमूर्तिः कथं भवेत् ? ॥ ३० ॥

पद्महस्तो भवेद्ब्रह्मा शूलपाणि महेश्वर ।
चक्रपाणिर्भवेद्विष्णुरेकमूर्तिः कथं भवेत् ? ॥ ३१ ॥

कृते जातो भवेद्ब्रह्मा त्रेतायां च महेश्वर ।
विष्णुश्च द्वापरे जात एकमूर्तिः कथं भवेत् ? ॥ ३२ ॥

ज्ञानं विष्णु सदा प्रोक्तं ब्रह्मा चारित्रमुच्यते ।
सम्यक्त्वं तु शिवं प्रोक्तमर्हन्मूर्तिस्त्रयात्मिका ॥ ३३ ॥

क्षितिजलपवनहुताशनयजमानाऽऽकाशसोमसूर्याख्या ।
इत्येतेऽष्टौ भगवति गीता वीतरागे गुणा ॥ ३४ ॥

क्षितिरित्युच्यते क्षान्तिर्जलं या च प्रसन्नता ।
निःसङ्गता भवेद्वायुर्हुताशो योग उच्यते ॥ ३५ ॥

यजमानो भवेदात्मा तपोदानदयादिभि. ।
अलेपकत्वादाकाशसङ्काश सोऽभिधीयते ॥ ३६ ॥

सौम्यमूर्तिरुचिश्चन्द्रो वीतराग. समीक्ष्यते ।
ज्ञानप्रकाशकत्वेन स आदित्योऽभिधीयते ॥ ३७ ॥

पुण्यपापविनिर्मुक्तो रागद्वेषविवर्जित· ।
अर्हंस्तस्य नमस्कार· कर्त्तव्य शिवमिच्छता ॥ ३८ ॥

अकारेण भवेद्विष्णू रेफे ब्रह्मा व्यवस्थित· ।
हकारेण हर प्रोक्तस्तस्याऽन्ते परम पदम् ॥ ३९ ॥

अकार आदिधर्मस्य मोक्षस्य च प्रदेशक
स्वरूप परमज्ञानमकारस्तेन प्रोच्यते ॥ ४० ॥

रूपिद्रव्यस्वरूप वा दृष्ट्वा ज्ञानेन चक्षुषा ।
दृष्टं लोकमलोक वा रकारस्तेन प्रोच्यते ॥ ४१ ॥

हता रागाश्च द्वेषाश्च हता मोहपरीषहा ।
हतानि येन कर्माणि हकारस्तेन प्रोच्यते ॥ ४२ ॥

सन्तोषेणाऽभिसम्पूर्ण प्रातिहार्याऽष्टकेन च ।
ज्ञात्वा पुण्य च पाप च नकारस्तेन प्रोच्यते ॥ ४३ ॥

भवबीजाऽङ्कुरजनना रागादय क्षयमुपगता यस्य ।
ब्रह्मा वा विष्णुर्वा हरो जिनो वा नमस्तस्मै ॥ ४४ ॥

इति महादेवस्तोत्र समाप्तम् ।



# अध्यात्मसार

श्रीतिमलाभ्यास्यासहितः (यन्त्रस्थः) ।

( सम्पूर्ण–भागों में ) ।

॥ अर्हम् ॥

श्रीविजय-नेमि-विज्ञान-कस्तूर-सूरिसद्गुरुभ्यो नमः ।

## कलिकालसर्वज्ञश्रीहेमचन्द्राचार्यविरचितं

# ॥ सकलाऽर्हत्स्तोत्रम् ॥

## पन्यासश्रीकीर्तिचन्द्रविजयगणिविरचित-
## कीर्तिकलाव्याख्याविभूषितम् ।

सकलाऽर्हणाग्रभूमिं सकलाऽर्हगुणाकरान् ।
सकलाऽर्हद्ध्येयरूपान् नमामि सकलाऽर्हतः ॥ १ ॥

सकलाऽर्हद्भक्तिवशः पन्यासः कीर्तिचन्द्रोऽहम् ।
सकलार्हत्स्तोत्रस्य प्रकरोमि कीर्तिकलाऽभिधां व्याख्याम् ॥

अथ कलिकालसर्वज्ञो भगवान् श्रीहेमचन्द्राचार्यस्त्रिषष्टिशलाकापुरुषचरित्रं नाम महाप्रबन्धं चिकीर्षुर्विघ्नप्रशमनपूर्वकप्रारिप्सितपरिसमाप्तिकामो मङ्गलमाचरन् कीर्तनीयाश्चतुर्विंशतिमर्हत एव सकलमङ्गलाऽधिष्ठानतया सरत्नादौ गुणपूजास्थानमित्यार्हन्त्यं प्रणिदधान आह—

सकलाऽर्हत्प्रतिष्ठानमधिष्ठानं शिवश्रियः ।
भूर्भुवःस्वस्त्रयीशानमार्हन्त्यं प्रणिदध्महे ॥ १ ॥

समृद्धिस्तस्या वा, सर्वकल्याणसम्पद इत्यर्थ.। "श्व.श्रेयस शिव भद्रं कल्याण मङ्गल शुभमि"ति, "शोभासम्पत्तिपद्मासु लक्ष्मी श्रीरिव दृश्यत" इति चाऽमर.। अधिष्ठानम्=स्वस्मिन् याऽधिष्ठितिरधिकं विशेषेणेतरविलक्षणतया स्थितिस्तत्साधनम्। अधितिष्ठत्यस्मिन्निति कारणे कार्योपचारादधिष्ठानसाधनेऽधिष्ठानोक्तिः, आश्रय इत्यर्थ.। अर्हत्स्वेव तादृशश्रीस्थिति., तत्र हेतुश्चाऽऽर्हन्त्यमित्युपचारादार्हन्त्यमेव तदधिष्ठानमिति हृदयम्। अर्हन्त्यादेव तादृशश्रीलाभो नाऽन्यथा, कथमन्यथाऽर्हत्स्वेव तादृशश्री नोऽन्यत्रेति तादृशश्रीलाभ एवाऽसाधारणं प्रयोजनमित्यतस्तदवश्यं प्रणिधेय प्रेक्षावतेति भाव.। तदेव गुणानुक्त्वा महिमानमाह—भूर्भुवःस्वस्त्रयीशानम्=भूर्नागलोक, पातालमित्यर्थ। भुवर्मनुष्यलोक स्व. स्वर्ग तेषा त्रयी तस्या ईशानमीशित्वाऽनुगुणमहिम, धर्मधर्मिणोरभेदाद्धर्मी चेदीशानो धर्मोऽपीत्येवमुक्तिरिति बोध्यम्। ईशानत्वप्रयोजकत्वात्तादर्थ्यात्ताच्छब्द्यं च। अर्हन् हि भूर्भुवं स्वस्त्रयीशान, यदुक्तम्—"मूर्ध्ना यस्मै नमस्यन्ति सुरासुरनरेश्वरा" इति, "छत्रत्रयी त्रिभुवनप्रभुत्वप्रौढिशसिनी"ति च। न हि कोऽप्यनीशानमानमति, य च सर्वे नमस्यन्ति स सर्वेषामीशान', अत एव छत्रत्रयाद्यतिशय इति ध्येयम्। "भूस, भुवसि"ति यथाक्रम नागलोकमनुष्यलोकवाचकाविति सिद्धहेमबृहद्वृत्ति। "स्वरव्यय स्वर्गनाकत्रिदिवत्रिदशालया" इति चाऽमर। महान् महिमाऽऽर्हन्त्यस्य, यदुत तत्प्रभावात्त्रिभुवनेशानत्वमिति भाव.। यदपि समाधानम्—"अत्राद्यन्तयोर्भूस् स्वरश्ब्दयो· पातालनाकिलोकवाचकयो सन्निध्यात्तदन्तरालवर्त्तिभुवश्शब्दस्य मर्त्यलोकवाचकत्वमनन्यगतिकत्वेन नाऽयुक्त-

मिति । तत्राऽनन्यगतिकत्वेनेत्यसमञ्जसम् । यदि गतिर्नास्तीति यादृच्छिकोऽर्थः कल्प्यते । अत्र च शुभस्य शब्दस्य मर्त्यलोकेऽनन्य उक्तार्हत्सामान्य एव गतिरिति कुतोऽनन्यगतिकत्वमिति । विशेष माह—आर्हन्त्यम्=अर्हतो भाव कर्म चाऽऽर्हन्त्यम् । "अर्हतोऽन्त्य च" (सि हे ७१-६२) इति सूत्रेण न्तादेशो च सिध्यति । चतु स्त्रिंशदतिशयप्रातिहार्यविस्तारेत्यर्थः । सहजातिशयादि केवलज्ञानादिमी यावत् । तत्, प्रणिदध्महे=कायवाङ्मनोभिस्तन्मयत्वं साधयाम, यद् हि यत्कर्मसिद्धिःस्यादिति हृदयम् । तद्धि भावरूपत्वात्सन्निधेयत्वा न्नतूपासनादिकर्माऽर्हतीति तत्प्रणिदध्महे इति भावः । अस्मिंस्तोत्रे सर्वत्रा ऽनुष्टुप्छन्द ॥ १ ॥

तदेवमुपक्रमकारेण धर्मे स्तुत्वा धर्मिणं स्तौति—

नामाऽऽकृतिद्रव्यभावैःपुनतस्त्रिजगज्जनम् ।
क्षेत्रे काले च सर्वस्मिन्नर्हतः समुपास्महे ॥ २ ॥

नामेति । सर्वस्मिन्=सर्वत्रैव, प्रत्यक्षैकत्वेन वा, क्षेत्रे= भरतमहाविदेहादौ क्षेत्ररूपवाच्ये, काले=अवसर्पिण्यादात्मके प्रत्यारे काले, वा समुच्चये तेन सर्वस्मिन्निति क्षेत्रकालयोर्द्वयोर्विशेषणम्, सर्वस्मिन् क्षेत्रे सर्वस्मिन् काले चेत्यर्थः । त्रिजगज्जनम्=भवना नस्वेचरस्य द्वयोरेव वा जगतां भुवनानां जनं प्रजाम्, 'लोके जन प्रजा" इति हैम । अत्र जनमिति सामान्योक्त्या देवाऽन्तरस्यापि पतपाताऽभाव सूच्यते । नामाऽऽकृतिद्रव्यभावैः=नाम नामनिक्षेपविषय भवनस्पर्शादीनि, आकृति स्थापनानिक्षेपविषयोऽर्हत्प्रतिमादिः, द्रव्य

द्रव्यनिक्षेपविषय., यस्य जीवस्याऽर्हत्पर्यायो भावी स भविष्यदर्हज्जीव । भावो भावनिक्षेपविषयोऽर्हत्पर्यायापन्न समवसरणाद्यवस्थितोऽर्हन्, तैरेतैश्चतुर्भि प्रकारै. पुनतः=शुचीकुर्वत, नामस्मरणादिना नाम्ना कृत्वा, आकृतेर्वन्दनपूजनादिनाऽऽकृत्या कृत्वा, द्रव्यस्य पितृत्वपुत्रत्व-सख्यदास्योपचारपरिचरणादिना द्रव्येण कृत्वा, भावस्य देशनाश्रवणाऽतिशयादिना भावेन कृत्वा चाऽन्तर्बहिर्मलराहित्य जायते जनस्येति तै प्रकारैरर्हन् त्रिजगज्जन पुनातीत्युच्यते इति बोध्यम् । एतेन तेषा-मवश्यसमुपास्यत्व सूच्यते । येन हि स्वस्य पवित्रीकरण सोऽवश्य सेवनीयो भवति मतिमताम्, अतस्तादृशान्, अर्हतः=अर्हत्पदवाच्या-नृषभादितीर्थकृत., समुपास्महे=सम्यग् भक्तिश्रद्धादिनिर्भरतया पर्युपा-स्महे, यथा पवित्रीकृता. स्याम इति हृदयम् । त्रिजगत्पवित्रीकरणलक्षणं वैलक्षण्यमर्हतोऽसाधारणमिति तात्पर्यम् । यद्यपि सर्वत्र सर्वदा च न भावाऽर्हतो विद्यमानता, तथापि नाम्नाऽऽकृत्या द्रव्येण च पवित्रीकार-क्रियासम्पत्तेः क्वापि भावेन च तत्सम्पत्तेस्तैश्चतुर्भि पवित्रीकरणस्य सामान्यत उक्तिर्युज्यत एव । नहि सर्वदा सर्वत्र च तच्चतुष्टये तात्पर्य-मसम्भवादिति ध्येयम् ॥ २ ॥

तदेवमुक्तप्रकारेण सामान्यतोऽर्हत स्तुत्वा तद्विशेषान् यथाक्रम स्तुवन्नादौ प्रथममृषभनाथ स्तौति—

**आदिम पृथिवीनाथमादिमं निष्परिग्रहम् ।**
**आदिमं तीर्थनाथं च ऋषभस्वामिन स्तुमः ॥ ३ ॥**

आदिममिति । आदिमम्=आदौ भव आदिम तादृशम्, पृथिवीनाथम्=पृथिव्या नाथ ईश इति तम्, युगादौ पृथिव्यां न कोऽपि राजाऽऽसीत् । कच्छमहाकच्छादिस्वामी न सामी तस्मिममनाथेऽत्राधिप आसीदिति भावः, राज्याभिषेकः इत्यनाचार्य वर्णितमिति बोध्यम् । ननु पृथिवीनाथो न स्तुत्यर्हः साम्प्रतमैहिककामनाऽस्मादृशामुष्मिककामनायाश्चतोऽसिद्धेरत्यत आह—आदिमम् प्रथमम्, निष्परिग्रहम्=परिग्रहो दाराऽगारादिस्वामित्वं, तस्माद्विरहितो निष्परिग्रहो निर्ग्रन्थस्तम्, युगादौ स एव सर्वप्रथमं परिग्रहत्यागम इति भाव्यम् । ननु बहवो निष्परिग्रहा इति न तत्र कस्याऽपि निष्परिग्रहेण स्तुत्यताऽऽयाति समानत्वादित्यत आह—आदिमं तीर्थनाथम्=तीर्थं साधुसाध्वीश्रावकश्राविकाख्यं समुदायरूपं चतुर्विधसङ्घस्तस्य नाथ इव विधिनिषेधोपदेशकत्वात्तीर्थङ्कर इत्यर्थः । अवसर्पिणीकालप्रथमतीर्थप्रवर्तयिता आदिनाथ भगवान् । केवलज्ञानानन्तरं च समवसरणे तेन कृपया देशनया प्रबुद्धानां गृहिमहात्मनामणुव्रतानां प्रभोर्विहारकाले चतुर्विधं सङ्घः स्थापितः समुदाये । प्रथममित्येकस्यैकदाऽपि सर्वत्र तदन्वयेनेष्टं सिद्धमपि, तथापि सर्वत्र मातापितृनेत्रवैकल्यदर्शनाय साक्षात्कृतिरिति बोध्यम् । स च इत्यपेक्षायामाह—ऋषभस्वामिनम्=ऋषभः प्रथमस्तीर्थङ्करः, अस्मिन् गर्भस्थे मात्रा स्वप्ने प्रथममृषभदर्शनाद्वृषभलाञ्छनत्वाच्च पितृभ्यामृषभ इति नामाऽस्य, स चाऽसौ स्वामी च स्वामी, तम्, स्तुवे=कीर्तयामि । कीर्तनं लोकविलक्षणगुणैर्विशिष्टप्रभुत्वेनेति बोध्यम् ॥ १ ॥

अथ द्वितीयमजितजिनं स्तुवन्नाह—

**अर्हन्तमजितं विश्वकमलाकरभास्करम् ।**
**अम्लानकेवलाऽऽदर्शसङ्क्रान्तजगतं स्तुवे ॥ ४ ॥**

अर्हन्तमिति । **विश्वकमलाकरभास्करम्**=विश्वं जगत् । तात्स्थ्यात्ताच्छब्द्यमिति जगज्जीवसमुदयः कमलानां स्वनामख्यातानां पुण्यविशेषाणाम्=पङ्कजानामाकरः खनिरिव, तस्य प्रबोधकत्वात्तत्सम्बन्धी भास्करः सूर्य इव भास्कर इति गौणी लक्षणा, तं तादृशम् । यथा हि सूर्यः स्वकिरणैः कमलानि प्रबोधयति=विकासयति, तथाऽयं जनान् देशनावाग्भिः प्रबोधयति=प्रबोधं ददातीति क्रियासाम्यादुपमा । सा च कमलप्रबोधोऽन्यो जगत्प्रबोधश्चाऽन्य इति द्वयोर्भेदेऽप्यभेदाऽध्यवसाय-रूपाऽतिशयोक्त्यनुप्राणिता । एतेन तस्य तादृशी देशनावाग्यया विश्वं प्रबोध्यत इति वचनाऽतिशयः सूच्यते । "स्यादाकरः खनिः खानिरि"ति हैमः । तत्र हेतुगर्भं विशेषणमाह—**अम्लानकेवला-ऽऽदर्शसङ्क्रान्तजगतम्**=अम्लानोऽमलः, अतिस्वच्छ इत्यर्थः, तादृशो यः केवलं तदाख्यं क्षायिकं ज्ञानमादर्शो दर्पण इव, तत्र सङ्क्रान्तं विषयतया प्रतिबिम्बितं जगत्तात्स्थ्यात्ताच्छब्द्यमिति जगत्पदार्थसार्थो यस्य तं तादृशम् । अत्राऽम्लानेति न केवलविशेषणमव्यभिचारात्सम्भव-व्यभिचाराभ्यां विशेषणस्य सार्थक्यात् । आदर्शविशेषणं तु युज्यते, तादृशश्चैव स केवलज्ञानोपमानं भवितुमर्हति, तस्यैव च प्रतिबिम्ब-सङ्क्रान्तियोग्यताऽपि । किन्तु तथा सति तस्य केवलपदानन्तरमादर्श-पदसमभिव्याहारेण प्रयोग उचितः । तथाप्येकत्रौचित्यादन्यत्र च तथा-

स्वाभाव्याद्विमलं केवलमिति बोधकत्वया च समस्तस्य केवलदर्शीति पदस्यैव तद्विशेषणमिति बोध्यम् । अत्र केवलस्याऽऽदर्शतुल्यतया तत्र जगत्प्रतिबिम्बीभाव उचित एव । किन्तु ज्ञाने प्रतिबिम्बीभावोऽन्य आदर्शे चाऽन्य इति द्वयोर्भेदेऽप्यभेदाध्यवसाय इत्यतिशयोक्तिमूला उपमा । एवञ्च यस्य ज्ञाने जगत्सङ्क्रान्तं तस्य जगत्प्रबोधकत्वं नाऽसम्भवमिति जगत्प्रबोधे ज्ञाने जगत्सङ्क्रान्तेर्हेतुभावात्पदार्थहेतुकं काव्यलिङ्गम् । तथाऽतिशयोक्त्यनुप्राणितोपमोत्थापितमिति सङ्करः । एतेन तस्य जगद्विषयकं ज्ञानमिति ज्ञानाऽतिशयो ध्वन्यते । "दर्पणे मुकुराऽऽदर्शावि"त्यमरः । अत एव, अर्हन्तम्=सुरासुरनरेन्द्रादिकृतां पूजामर्हतीति तादृशम् तीर्थङ्करमित्यर्थः । यो हि विश्वप्रबोधककेवलज्ञानवान् सोऽर्हत्त्वेन भवतीति भावः । यो हि सर्वेषामुपदेशकस्तस्य सर्वैः कृता पूजा युज्यत एवेति पूजातिशयो ध्वन्यते । ईदृशसकलविशेषणविशिष्टाभिधानाय विशेष्यवाक्यापूरणाय चाऽऽह— अजितम्=न जितो वशीकृतो रागादिभिः बाह्याऽऽन्तरारिभिरिति स इत्यन्वर्थोऽजितनामा द्वितीयस्तीर्थङ्करः अस्मिन् गर्भस्थे जननी द्यूते मया न जितेति तदनुसारेण पित्रा कृताऽजिताऽभिधानम्, तम् । यो हि वैरजितस्ते तेनैव जिता इति यो वीतराग स एवोक्तविशेषणमर्हति नाऽन्य इति भाव । एतेनाऽपायाऽपगमाऽतिशयो ध्वन्यते । स्तुवे=स्तुतिविषयीकरोमि । अत्रैकवचनं पूर्वत्र च बहुवचनमित्यसङ्गतिर्नो भावनीया एकस्मिन्नर्थेऽप्यस्मदो बहुवचनाऽनुशासनात् एकस्मिन्नपि समाधेयम् ॥ ४ ॥

अथ तृतीयं श्रीसम्भवजिनं स्तुवन्नाह—

**विश्वभव्यजनाऽऽरामकुल्यातुल्या जयन्ति ताः ।**
**देशनासमये वाचःश्रीसम्भवजगत्पतेः ॥ ५ ॥**

विश्वेति । **देशनासमये**=देशना दानशीलतपोभावभेदाच्चतुर्विध-धर्मोपदेश, यदुक्तम्—'दानशीलतपोभावभेदाद्धर्मं चतुर्विधम् । मन्ये युगपदाख्यातु चतुर्वक्त्रोऽभवद्भवानि"ति । केवलोत्पत्यनन्तरं देवैर्विकृते समवसरणे केवलिना जिनेश्वरेण दीयमानं प्रवचनं देशनेति प्रसिद्धमिति बोध्यम् । तस्या देशनाया य समय कालस्तस्मिन्, देशनासमयभवा इत्यर्थ. । यद्वा देशनाया य समय सङ्केत आगमादिरूपेण प्रवृत्तः सम्प्रदायस्तस्मिंस्तत्र वर्तमाना श्रुतरूपा वाच, **ताः**=प्रसिद्धाः, बहु-विषयत्वान्नानाविधाः श्रोत्रनुकूलभाषापरिणतिशीलत्वाच्च नानाप्रकाराः, यदुक्तम्—"देवा दैवीं नरा नारीमसुरा आसुरीं तथा । तिर्यञ्चोऽपि च तैरश्चीं मेनिरे भगवद्गिरमि"ति । ततश्चाऽखिलवाग्विलक्षणत्वाद-निर्वचनीया इत्यर्थः । ननु भवतु तास्तथा, तेनाऽस्माक को लाभ इत्यतो विशेषणमाह—**विश्वभव्यजनाऽऽरामकुल्यातुल्याः**=विश्वे सर्वे ये भव्याः सेत्स्यन्तो जना, सेत्स्यन् भव्योऽन्योऽभव्य इति हि सम्प्रदाय । विश्वे जगति ये भव्या जना इति वा, त आरामा उप-वनानीव, वाक्सलिलसेचनादिना पोषादिमत्त्वसाधर्म्यात् । "आरामः स्यादुपवनमि"त्यमरः । तेषा कुल्यातुल्या उद्यानसारिणीसन्निभा । यथा हि सारिणीसलिलसेकेनोपवनवृक्षलतादयो वर्धन्ते पुष्पफलादि-समृद्धिमन्तश्च जायन्ते, तथा भगवद्वच प्रतिपाद्यधर्मसम्पर्कमेत्य भव्य-

पर्यवसिता एकस्मिन्नेव वस्तुनि=अपेक्षाभेदेनाऽविरुद्धतया समावेशा-त्सिद्धान्तविषयीकृता यस्मिंस्तदनेकान्तम्, तच्च तन्मत वादश्चाऽनेकान्तमत स्याद्वाद', यदुक्तम्—"स्यान्नाशि नित्य सदृशं विरूपं वाच्य न वाच्य सदसत्तदेवे"ति "अनन्तधर्मात्मकमेव तत्त्वमतोऽन्यथा सत्त्व-मसूपपादमि"ति च । नित्यानित्यत्वादीनामेकस्मिन् समावेशप्रकारश्च मत्कृताऽन्ययोगव्यवच्छेदद्वात्रिंशिकाकीर्तिकलातोऽवसेय । "मृताव-वसिते रम्ये समाप्तावन्त इष्यत" इति विश्व. । तदेव चाऽङ्गोपाङ्गा-द्यतिविस्तृततया नयभङ्गादिकल्लोलमालाऽऽकुलतया मिथ्यात्वमतिदुर-धिगमतया चाऽम्भोधि पारावार इव, तस्य समुल्लासने देशनावाक्च-न्द्रिकाभि समुत्कर्षसमापादने चन्द्रमाश्चन्द्र इव । चन्द्रेण हि समुद्रस्यो-ल्लासन प्रसिद्धम्, तद्वदनेनाऽप्यनेकान्तमतोल्लास इत्युपमा, सा च समुद्रोल्लासनमन्यदनेकान्तमतोल्लासनं चाऽन्यदिति द्वयोर्भेदेऽप्यभेदरूपा-ऽतिशयोक्त्यनुप्राणिता । चन्द्ररूप इत्यर्थे तु पूर्वत्राऽम्भोधिरूप इत्यर्थो बोध्य । ततश्च परम्परितरूपकाऽलङ्कार । अत्र पक्षे च चन्द्रेण समुद्रस्योल्लासनमुचितमेवेति भाव. । "हिमांशुश्चन्द्रमाश्चन्द्र" इत्यमर. । यद्वा—अनेके, अन्ता अम्यते गम्यते प्रतीयत इत्यन्ता धर्मा विरुद्धा अविरुद्धाश्च, तेषा यन्मतमेकस्मिन्नेव वस्तुन्यपेक्षाभेदेनाऽविरुद्धतया कथञ्चित्समावेशात्स्वीकार, अनेकान्तवाद: स्याद्वादाऽपरपर्याय इत्यपि व्याख्यानम् । शेष पूर्ववत् । अत्र हेतुगर्भमपर विशेषणमाह—

**भगवान्**=प्रशस्तो भूमा च भगो ज्ञानादिरस्त्यस्येति स तादृश. । यदुक्तम्—"ऐश्वर्यस्य समग्रस्य धर्मस्य तपस.श्रिय । ज्ञानवैराग्ययो-श्चैव षण्णा भग इतीरणे"ति । प्रशस्तभूमज्ञानादिमतोऽनेकान्तमतसमु-

स्वसने नाऽस्तीति भाव । विशेष्यमाह—अभिनन्दनः=चतुर्थस्तुतीयस्तीर्थङ्करः अस्मिन् गर्भस्थे राज्ये सर्वतोऽप्यानन्दभावात्पितृभ्यां तदनुसारेण कृताऽभिनन्दनाऽभिख्यः, अभिनन्दयतीत्यभिनन्दन इत न्वर्थनामेत्यर्थः । नन्द्यादित्वादन । अमन्द=न मन्दमस्यममन्दमनल्पम्, शाश्वताऽस्खलिततयाऽनन्तमित्यर्थः । अन्याऽऽस्वस्त्वनित्यत्वादिना मन्द एवेति बोध्यम् । आनन्दम्=सुखम्, "स्यादानन्दथुरानन्द शर्म सातसुखानि च"इत्यमर । दयात्=ददातु प्रार्थनायां सप्तमी अत्र प्रार्थनैव सम्भवा न तु प्रेरणेति बोध्यम् । आनन्दप्रदानप्रार्थनेन च तस्याऽन्वर्थनामता व्यज्यते । अत्र शमाऽतिशय प्रतिपादित., इतरेऽप्यतिशया व्याप्तिन्यायेनोपलक्षिता वेदनीया । किञ्चाऽऽनन्दप्रदत्वान्यथाऽनुपपत्त्या तस्य ज्ञानाय इत्यपायाऽपगमाऽतिशय, भगवत्पदेन तु सर्वे एवाऽतिशया प्रतिपादिता बोध्या ॥ ६ ॥

अथ पञ्चमे सुमतिजिने स्तवमाह—

द्युसत्किरीटशाणाग्रोत्तेजिताङ्घ्रिनखावलिः ।
भगवान् सुमतिस्वामी तनोत्वभिमतानि वः ॥ ७ ॥

द्युसदिति । द्युसत्किरीटशाणाग्रोत्तेजिताङ्घ्रिनखावलिः=दिवि सीदन्ति इति ते द्युसदः सुरा देवा सेन्द्रास्तेषां किरीटानि मुकुटान्येव कठिनत्वात्तीक्ष्णीकरणयोग्यत्वात् शाणा शस्त्रादितीक्ष्णीकरसाधनकषोपलास्तेषामग्रभागैः कोटिभिरित्यर्थः । उत्तेजिता निरन्तरसंपर्कात्सम्पर्षणवशात्तामपातक्रमेण तीक्ष्णीकृताऽत एव दीप्तिशयसम्पन्ना भीताङ्घ्र्योः पादयोर्नखानामावलिः पङ्क्तिर्यस्य स

तादृशः । देवा हि भगवन्त भक्तिश्रद्धाऽतिशयादतिसान्निध्येन तथा प्रणमन्ति यथा तेषां किरीटाग्राणि भगवदङ्घ्रिनखसङ्गतानि भवन्ति, ततश्च मुहुर्मुहुस्तथासंघट्टनेन नखाना तानव दीप्तिविशेषश्च जायते । शाणाऽग्रे घर्षणेन शस्त्रादीनामुत्तेजन प्रसिद्धमेव । अत्र शस्त्राणामुत्तेजनमन्यन्नखानां चाऽन्यदिति द्वयोर्भेदेऽप्यभेदाऽध्यवसायमूलाऽतिशयोक्तिजीवित किरीटशाणेतिरूपकम् । "आदितेया दिविषद" इति, "पदङ्घ्रिश्चरणोऽस्त्रियामि"ति चाऽमर । अत्र पूजाऽतिशय· प्रतिपादित । "मुकुट पुन । मौलि किरीट कोटीरमुष्णीषमि"ति, "शाणस्तु निकष कष" इति च हैम. । देवकृतप्रणामसमर्थनाय विशेषणान्तरमाह—**भगवान्**=सहजाद्यतिशयाद्यैश्वर्यादिसमन्वितः, **सुमतिस्वामी**=सुशोभना केवलाख्या मतिर्ज्ञान यस्येत्यन्वर्थनामा, अस्मिन् गर्भस्थे मातुः सुमतिभावात्पितृभ्या तदनुसारेण सुमतिरिति कृताऽभिख्यश्च सुमतिनामा पञ्चमस्तीर्थकृत्स चाऽसौ स्वामिवत्पालकत्वात्स्वामी स·, एतेन ज्ञानाऽतिशय. प्रतिपादितः । **वः**= स्तोतॄणा वाचकाना च, **अभिमतानि**=अभीष्टानि, बहुवचनेन सर्वाऽभीष्टप्रदत्व सूच्यते । **तनोतु**=सम्पादयतु । यो ह्यभिमतप्रद· सोऽवश्य स्वय निरपायः स्यादित्यपयाऽपगमाऽतिशयः सूचित. । वागतिशयश्च साहचर्याद् भगवत्पदमहिम्ना च सूचितोऽवगन्तव्यः । तदेवमजितस्वामिस्तुतौ ज्ञानाऽतिशयः सम्भवजिनस्तुतौ वागतिशयोऽभिनन्दनजिनस्तुतावपायाऽपगमाऽतिशय· सुमतिस्वामिस्तुतौ च पूजातिशय. क्रमश· कण्ठरवेण प्रतिपादितोऽवगन्तव्य ॥ ७ ॥

**शिवम्**=भद्रम्, **पुष्णन्तु**=परोत्कर्षमानयन्तु, पद्मप्रभप्रभोर्दर्शने तादृश्यस्तद्देहभासो मनोज्ञत्वादर्हत्यनुरागविशेप जनयन्ति, अर्हद्भक्त्यादिना च शिवपोषः प्रसिद्ध एवेति भावः। अत्र कोपादन्तरङ्गारिमथने आरुण्यस्य कोपहेतूत्प्रेक्षा न सङ्गच्छते। यो हि यं मथ्नाति स तस्य प्रभुरिति तस्य तेन प्रभावितत्वोत्प्रेक्षा न मनः प्रीणयत्यनुचितत्वात्। किञ्च कोपान्मुखनेत्रादीनामेवाऽरुणिमा प्रसिद्धो न तु देहस्येति सुधीभिर्विभावनीयम् ॥ ८ ॥

अथ सप्तम सुपार्श्वजिनं स्तुवन्नाह—

**श्रीसुपार्श्वजिनेन्द्राय महेन्द्रमहिताङ्घ्रये ।**
**नमश्चतुर्वर्णसङ्घगगनाऽऽभोगभास्वते ॥ ९ ॥**

श्रीसुपार्श्वेति। **चतुर्वर्णसङ्घगगनाऽऽभोगभास्वते**=चत्वारो वर्णा. प्रकारा साधुसाध्वीश्रावकश्राविकारूपा यस्मिन् स तादृशश्चाऽसौ सङ्घश्च स साध्वादीना बहुसङ्ख्यकत्वान्महत्त्वाद् गगनस्याऽऽकाशस्याऽऽभोगो विस्तारस्तस्य भास्वानिव प्रकाशेनेव ज्ञानेन तमोनाशकत्वाद् भास्वान्, तस्मै। "प्रपञ्चाऽऽभोगविस्तारव्यासा" इति हैमः। एतेन सङ्घस्याऽतिविस्तृतत्वं भगवत सूर्यस्येव तमोनाशनेऽप्रतिमत्व च ध्वन्यते। यथा सूर्यः स्वप्रचण्डप्रकाशेन गगनस्थमन्धतमसमपि सद्य एव नाशयति, तथाऽय जिनोऽप्यतिशयवत्या वाचा सज्ज्ञानप्रदानादिनाऽज्ञान दूरीकरोतीति भाव.। तदेव ज्ञानाऽतिशयो वागतिशयश्च प्रतिपादितोऽवगन्तव्यः। अत एव, **महेन्द्रमहिताङ्घ्रये**=महान्त प्रतापादिभिरन्यापेक्षयोत्तमा ये इन्द्रा देवासुरनरेन्द्रास्तैर्महितौ पूजितावङ्घ्री

चरणौ यस्य स तादृशस्तस्मै, महेन्द्रपूजितचरणाय । यो हि ज्ञान-विज्ञानज्ञानादिमान् स एव महेन्द्रपूजितो भवति । यदुक्तम् "गुणाः पूजास्थानं गुणिषु न च लिङ्गं न च वयः" इति भावः । अत्र पूजाऽतिशयः प्रतिपादितः । "पदद्वयमिदमग्रेऽभिधास्यामि" स्मर । विशेष्यमाह—श्रीसुपार्श्वजिनेन्द्राय=सुपार्श्वे=यस्मिन् गर्भस्थे सति स्वप्ने पार्श्वे सर्पशय्यां दृष्टवतीति जनन्या सुपार्श्वमभ्यासित्मन्या तदनु-सारेण सुपार्श्व इति कृताऽभिधानः, स चाऽसौ भगवान् रागादीनिति जिनास्तेषु देवेष्विन्द्र इव श्रेष्ठः जिनाऽतिशयातिशयतया युक्तश्चाऽसौ श्रीसुपार्श्वजिनेन्द्रस्तस्मै । एतेनाऽपायाऽपगमाऽतिशयो ध्वनितः, यो हि रागादिविजेता तस्य नाऽपायलेशोऽपि । नमः=नमस्कारः अस्त्विति शेषः । 'यत्राऽन्यत्क्रियापदं न श्रूयते तत्रास्तिर्भवन्तीपरः प्रयुज्यते" इति हि महाभाष्यम् । अथोपमाऽलङ्कारः ॥ ९ ॥

अथाऽष्टमं चन्द्रप्रभजिनं स्तुवन्नाह—

चन्द्रप्रभप्रभोश्चन्द्रमरीचिनिचयोज्ज्वला ।
मूर्तिर्मूर्तसितध्याननिर्मितेव श्रियेऽस्तु वः ॥ १० ॥

चन्द्रप्रभेति । चन्द्रप्रभप्रभोः = चन्द्रस्य प्रभा कान्तिरिव प्रभा यस्य स इत्यन्वर्थनामा यस्मिन् गर्भस्थे मातुश्चन्द्रपानदोहदमासीदि-त्यतो तदनुसारेण चन्द्रप्रभेति कृताऽभिधानः, स चाऽसौ प्रभुः स्वपदे स्थितिना पालकत्वात्कुमतैर्निरसनाच्च स्वामी तस्य, मूर्तसितध्याननिर्मितेव =मूर्तं रूपि सितं शुक्लं च यद्ध्यानं शुक्लध्यानमिति प्रसिद्धं तेन निर्मिता घटितेवेत्युत्प्रेक्षा । ध्यानं न मूर्तम् किन्तु निर्मापनिर्वाहस्य तन्मूर्तता

मापन्नतयोत्प्रेक्षितम् । कथमन्यथा शुक्लध्यानवह्निरञ्जनत्वं तन्मूर्तेरिति भाव । ध्याननिर्मितत्वोत्प्रेक्षया च सर्वविधभावाऽतिशय॰ प्रतिपादितोऽवगन्तव्य. । सम्प्रत्यन्वर्थनामत्वायाऽऽह— **चन्द्रमरीचिनिचयोज्ज्वला**=चन्द्रस्य मरीचीना किरणाना निचय॰ पुञ्ज इवोज्ज्वला शुभ्रा, चन्द्रकिरणपुञ्जवत्सिता निर्मलाऽऽह्लादिनी चेत्यर्थ । अत्र च शरीरद्युतिवर्णनेन सर्वविध शारीरोऽतिशय उपलक्षणत्वात्सूचितो बोध्यः । सा केत्यपेक्षायामाह— **मूर्त्तिः**=तनुर्बिम्ब वा, **वः**=युष्माक स्तोतॄणाम्, **श्रिये**=सम्पदे, **अस्तु**=भूयात् । "शोभासम्पत्तिपद्मासु लक्ष्मी श्रीरिव दृश्यत" इत्यमर । उत्प्रेक्षोपमयो ससृष्टिः । यः स्वय बाह्याऽऽभ्यन्तरश्रीसम्पन्न, स एवाऽन्यस्याऽपि श्रिये भवितुमर्हति, नहि स्वयमसिद्ध॰ परान् साधयतीति भाव॰ ॥ १० ॥

अथ नवम सुविधिजिन स्तुवन्नाह—

**करामलकवद्विश्वं कलयन् केवलश्रिया ।**
**अचिन्त्यमाहात्म्यनिधिः सुविधिर्बोधयेऽस्तु वः ॥११॥**

करामलकवदिति । **केवलश्रिया**=केवल केवलज्ञान तस्य श्रिया जगत्पदार्थसार्थपरिच्छेदप्रगुणया सम्पदा, केवलज्ञानमेव श्रीरतिशयस्तया वा, अथ च केवलाऽऽत्मस्वभावात्मकत्वान्निरुपाधिकत्वाच्छुद्धाऽद्वितीयाऽसहाया च या श्रीश्चिद्रूपा सम्पत्ति. केवलज्ञान तया, **विश्वम्**=अतीताऽनागतवर्तमानसर्वद्रव्यपर्यायविशिष्ट चराचरात्मक जगत् । **करामलकवत्**=करो हस्तस्तस्य तत्स्थत्वात्तत्सम्बन्धि यदामलकमामलक्या धाञ्या. फल तद्वत्, **कलयन्**=पश्यन् जानन् वा, यथा हि करस्थमा-

मस्तके सुकरतया सर्वथा परिच्छिद्यते तथा भगवता केवलज्ञानमिथा सिद्धमित्यर्थः । ज्ञानावरणादिघातिकर्मणां साकल्येन क्षय एव केवलो त्पत्तेर्वस्तुसर्वांशविषयकं तज्ज्ञानमितिभावः । एतेन ज्ञानातिशयः स्फुट एव प्रतिपादितः । कल्पतरुरिव ज्ञानार्थ., कल्पलतेव कामधेनुः । अत एव, अचिन्त्यमाहात्म्यनिधिः = अचिन्त्यस्याऽगम्यस्य मनसोऽप्यविषय-स्येत्यर्थः । यदि चिन्ताऽतीतं वागगोचरातीतमिति किन्तु अचिन्त्यमितिभावः । तादृशस्य माहात्म्यस्य महिम्नो निधिराकर., किमिव. परं माहात्म्यं प्रत्येकस्तुत ज्ञानेन सिद्धकल्पनम् । तत्र धर्मचक्षुषां चिन्तयस्थितमप्यशक्यम् । तादृश-सामर्थ्य एवाऽसम्भाव्यस्पर्शेन स्वाभाविकोऽयोग्यतादिभावः । एता-वानस्य महिमा अतो ज्यायांश्च पूरुष इति श्रुतम् । अन्वीक्षितक इति विशेष्याकाङ्क्षापूरणाय — सुविधिः=सुविधिरित्यभिधेये भगम-सौरीश्वर अस्मिन् गर्भस्थे मातुः सर्वविधिषु नैपुण्यादिगुण्यं तदनु-सारेण सुविधिरितिकृत्वाभिख्य पुष्पदोहदेन दन्तोद्गमाच पुष्पदन्तेत्य-परनामा सुशोभन सकलेशमदलाभिरपायतया मनोज्ञो विधिर्मुख्यत्वादि साधनमनुष्ठानं यस्य प्रतिपादनसम्बन्धेन भवत्सम्बन्धीरमणत्वनामा च, वः= युष्माकम् बोधये=परमार्थज्ञानाय अस्तु=भवतु । यो हि परमार्थस्य सर्वज्ञस्यैव बोधिदानेऽधिकारात् । यदुक्तम्—“ गुरवो सन्ति बोधेति शिष्यसारम्येन मानता । भारमदत्त्वमपनोद्य साधकेभ्यो गुरूत्तम ” इति । देशेन कालेन च व्यवहितोऽपि पदार्थसार्थो भगवतः करस्थाऽऽमल-कमसुरस इव परिच्छेद्योऽभवदेवमस्याऽऽत्मीयमहिमा, नैतादृशमहिमाऽन्यस्य कस्याऽपीति तस्याऽलौकिकमाहात्म्यविशिष्टत्वात् एव बोधः सम्भवति नाऽन्यस्मादनीदृशादितिभावः ॥ ११ ॥

अथ दशमं शीतलजिनं स्तुवन्नाह—

**सत्त्वानां परमानन्दकन्दोद्भेदनवाऽम्बुदः ।**
**स्याद्वादाऽमृतनिःस्यन्दी शीतलः पातु वो जिनः ॥१२॥**

सत्त्वानामित्यादि । **सत्त्वानाम्**=जीवानाम्, **परमानन्दकन्दोद्भेदनवाऽम्बुदः**=परमः शाश्वताऽखण्डत्वात्सर्वोत्कृष्टो य आनन्दः सुखमयत्वम्, स एव कन्दः पृथिव्यामिवाऽऽत्मनि सावरणः स्वभावत एव स्थितत्वादङ्कुरमूलविशेष इव, तस्योद्भेदोऽनुभवात्मकाऽङ्कुरोद्गमस्तस्य तत्सहकारित्वात्तत्सम्बन्धी नवाम्बुदो नूतनजलधर इव । वर्षर्तौ नूतनजलधरेण हि तद्वृष्टसलिलसम्पर्कात्कन्दादङ्कुरोद्गमः प्रसिद्धः, जिनेनाऽपि च प्रवचनादिना तत्पालनादिरूपसम्पर्कवशान्मुक्त्याद्यात्मकपरमसुखोद्गम इति भावः । ननु न नवाम्बुदसत्तामात्रेण कन्दोद्भेदः, किन्तु तद्वृष्टसलिलसम्पर्कादिनेति कथन्तान्निवृत्तये–विशेषणमाह— **स्याद्वादाऽमृतनिःस्यन्दी**=स्यादित्यव्ययमनेकान्तद्योतकम्, ततश्च स्याद्वादोऽनेकान्तवादः, एकस्मिन्नेव धर्मिणि विरुद्धसामान्यविशेषनित्याऽनित्याऽभिलाप्यानभिलाप्यसदसत्त्वभेदाऽभेदाद्यनन्तधर्मस्वीकारः । स एव वस्तुयाथात्म्यप्रतिपादकत्वादज्ञानात्मकविषमविषप्रमोषप्रगुणत्वादानन्दकन्दोद्भेदप्रयोजकत्वाच्चाऽमृतं पीयूषं पयश्च, तन्निःस्यन्दते उपदेशादिना वर्षणेन च सिञ्चतीत्येवंशीलः, स्याद्वादात्मकाऽमृतसेचक इत्यर्थः । "पीयूषममृतं सुधे"ति "पयःकीलालममृतमि"ति चाऽमरः । न चेदृश कोऽपि साधारणो जन इत्याह—**जिनः**=वीतरागः, एतेनाऽलौकिकाऽतिशयसामग्री सूचिता, वीतराग एव हि सकलाऽलौकिकाऽतिशयसम्पन्न इति तस्य तादृश-

स्याऽऽनन्दकन्दाग्रेदनममृतनिःस्यन्दनं च नाऽतिवर्तीति भाव । अतै- वाकथाऽनुक्रमनिर्देशत्वया विशेषणारकत्वं व्यज्यते । स च इति विशेष्याऽपेक्षायामाह—शीतलः=शीतं भावमधानत्वाच्छ्रैत्यं स्मर्ति सदुप- देशादिना भवतापाऽपहरणमुखेन सम्पादयतीत्यन्वर्थनामा अस्मिन् गणस्थे मधुराक्षरसद्यासितुत्रापाऽध्याराधनानुसारेण शिशूनां शीतल इति कृताऽभिख्यश्च दशमतीर्थङ्करः, वः=युष्मान्, पातु=रक्ष्यात्, अपा- यादिस्वर्णककालम्यत । शाश्वत एव रक्षको भवितुमर्हतीति भाऽन्यारक्ष, तस्य स्वयमसिद्धत्वादिति हृदयम् । आनन्दोद्भेदश्चाऽन्य कन्दोभेद श्चाऽन्य इति द्वयोर्भेदेऽप्यभेदाध्यवसायरूपातिशयोक्तिप्रेरिताऽनूतेति श्लेषाऽनुप्राणितोपमाऽलङ्कारोऽत्र बोध्य ॥ १२ ॥

अथैकादशं श्रेयांसजिनं स्तुवन्नाह—

भवरोगार्तजन्तूनामगदङ्कारदर्शनः ।
निःश्रेयसश्रीरमणः श्रेयांसः श्रेयसेऽस्तु वः ॥ १३ ॥

भवरोगेति । भवरोगार्तजन्तूनाम्=भवत्युत्पद्यते जन्तुरस्मिन्निति भवश्चतुर्गतिक संसार स एव रुजत्वनेन कृत्वा जीव इति रोग आध्यात्मिकाऽऽधिदैविकाऽऽधिभौतिककायिकवाचिकमानसिकजन्मादिकोपादि ज्वरादिपीडानिमित्तभावात् । एकान्तेन रोगनिमित्तत्वप्रतिपादनाय कार्ये कारणोपचाराद्वा भव एव रोग आध्यात्मिकादिपीडा, भवे हि तेषा- माध्यात्मिकादिषु स्थानामवश्यम्भावात् । यस्य हि न भवस्तस्य न रोग इति रोगा भवनिमित्त एव । यद्वा भवो जन्म, तत्सम्बन्धात्सम्बन्धी यो रोगस्तेनाऽऽर्ता भृशं पीडिता व्याकुला व्यसातमनुभवन्तो ये जन्तव.

प्राणिनस्तेषाम् भवात्मकरोगपराभूताना प्राणिनामित्यर्थ. । **अगदङ्कार-दर्शनः**=गदो रोगः, "रोगव्याधिगदाऽऽमया" इत्यमर. । न गदो यस्य सोऽगदस्त तादृश करोतीत्यगदङ्कारो भिषक्, योगमहिम्ना रोगाऽप-हारकत्वात्तद्रूप दर्शन प्रतिबिम्बाद्यवलोकन शासन स्याद्वादाख्य दर्शनं वा यस्य स तादृश, भवरोगाऽपहारकदर्शन इत्यर्थ । वैद्येन कृत्वा रोगस्येव जिनप्रतिमादिदर्शनतस्तच्छासनाऽऽराधनादिना च पापविशुद्धे-र्गुणवृद्धया भवस्योच्छेदात् । यदुक्तम् 'इत्याज्ञाराधनपरा अनन्ता परिनिर्वृताः । निर्वान्ति चाऽन्ये क्वचन निर्वास्यन्ति तथाऽपरे" इति, "भ्रान्तस्तीर्थानि दृष्टस्त्व मयैकस्तेषु तारक" इति चेति भाव· । तदुपपादक विशेषणमाह—**निःश्रेयसश्रीरमणः** = निश्चितमेकान्तेन श्रेय.शर्म न तु कथञ्चिदपि दु.खसम्भिन्नमिति नि श्रेयस मुक्तिस्तस्य तद्रूपा वा या श्री सम्पच्छाश्वताऽखण्डानन्दस्तस्य रमते इति रमण, मुक्तयात्म-कशाश्वताऽखण्डाऽऽनन्दमग्न., स क इत्यपेक्षायामाह—**श्रेयांसः**=तदाख्य एकादशस्तीर्थङ्कर, अस्मिन् गर्भस्थे जनपदे सर्वथा श्रेयोभावात् श्रवण-नक्षत्रे जन्मभावाच्च तदनुसारेण पितृभ्या श्रेयास इति कृताऽभिख्य, **वः**=युष्माकम्, **श्रेयसे**=कल्याणाय, यत्प्रशस्यतम तत्सिद्धये इत्यर्थ । **अस्तु**=भवत्विति प्रार्थये । प्रशस्यतमश्च भवरोगवियोग इति तादृश-विशेषणोपादानेन भङ्ग्या सूचित । यद्वा भवरोगाऽपहारान्मुक्त्याख्य-श्रेय प्राप्तिरेवेति - भवरोगोच्छेदकत्वान्मुक्तयेऽस्तु । भवरोगोच्छेदकस्य स्वयसिद्धस्य मुक्तये प्रभुतोचितैवेति पदार्थहेतुकं काव्यलिङ्गमलङ्कार, स च नि श्रेयसश्रीरमण इति श्रीतिस्त्रीलिङ्गसाम्याद्रमण इति श्लेषाच्च स्त्रिया रमण इवेति समासोक्तिसंसृष्ट । तेन च यथा पति स्त्रिय तथाऽय

पुनातु=शुचीकरोतु, तीर्थङ्करेण हि सदुपदेशाद्यात्मकोपकारादिना सन्मार्ग-प्रदर्शनात्तदाराधनेन कृत्वा कर्ममलाऽपकर्षणाज्जीवाना शुचित्वसम्पत्तिरिति वासुपूज्य पुनात्वित्युक्तमित्यवगन्तव्यम् । यो हि विश्वोपकारको विश्व-पूज्यस्ततो विश्वपवित्रीकरणाऽऽशोचितैवेति ध्येयम् ॥ १४ ॥

अथ त्रयोदश विमलजिन स्तुवन्नाह—

**विमलस्वामिनो वाच कतकक्षोदसोदराः ।**
**जयन्ति त्रिजगच्चेतोजलनैर्मल्यहेतव ॥ १५ ॥**

विमलेति । **विमलस्वामिनः**=तदाख्यस्य त्रयोदशतीर्थङ्करस्य, अस्मिन् गर्भस्थे जनन्या नैर्मल्यभावात्तदनुसारेण पितृभ्या विमलेति कृताऽभिख्यस्य, विगत मल यस्मात्तादृशस्य वीतरागस्येत्यन्वर्थता च ध्वन्यते । एतेनाऽपायाऽपगमाऽतिशय प्रतिपादित । तत्सहचारित्वाच्च ज्ञानाऽतिशय. पूजातिशयश्च स्वयमूह्य. । वचनाऽतिशयमाह—**कतक-क्षोदसोदराः**=कतक तदाख्यो जलशोधको द्रव्यविशेष , कतकाख्य-तरुफल वा । तस्य क्षोदश्चूर्णम् , तस्य सोदर —सोदरो हि सदृशो भवतीत्यतिसादृश्यप्रतीतिप्रयोजनया लक्षणया सदृश्य इत्यर्थ ! सादृश्य समर्थयस्तादृश विशेषणमाह—**त्रिजगच्चेतोजलनैर्मल्यहेतवः**=त्रयाणा जगता तात्स्थ्यात्ताच्छब्द्यन्यायाज्जगत्त्रयस्थितप्राणिना चेतासि मनासि सलिलानि जलानीव कषायादिरूपमलादिकलुषितानि, तेषा नैर्मल्यस्य निष्कलुषत्वस्य हेतवो निमित्तभूता । जलानां कतकक्षोदा इव त्रिजग-ज्जनमनसा कालुष्याऽपाकरणेन कृत्वा शुचित्वसम्पादिका इत्यर्थ विशेष्यमाह—**वाचः**=देशनावाण्य , कतकक्षोदक्षेपेण कलुष जल-

ममाधिकं भाग्य इति प्रसिद्धम्। तथा भगवत्पूजनाऽऽराधनेन कृतो रागादिमलक्षयोऽपेक्षतो विशुद्धिमापत इति भावः। अत एव, जयन्ति= सर्वोत्कर्षेण वर्तन्ते। भक्तीमयाधाऽनीरमत्वादिति भावः। एतेन वचनाऽविषयो व्यक्तमेव प्रतिपादितः। उपमाऽलङ्कारः ॥ १५ ॥

अथ चतुर्दशमनन्तजिनं स्तुवन्नाह—

स्वयम्भूरमणस्पर्धिकरुणारसवारिणा।
अनन्तजिदनन्तां वः प्रयच्छतु सुखश्रियम् ॥ १६ ॥

स्वयम्भूरमणेति। अनन्तजित् = चतुर्दशस्तीर्थङ्करः, अस्मिन् गर्भस्थे पित्राऽनन्तं रत्नदाम दृष्टमिति तदनुसारेण पित्रा ममानन्तजिदिति कृताऽभिख्योऽनन्तज्ञानादिसमन्वितत्वादनन्तं ज्ञानादिकं जयति स्ववशीकरोतीत्यनन्तजिदिति सार्थकनामा, स्वयम्भूरमणस्पर्धिकरुणारसवारिणा=स्वयम्भूरमणं नामकमपरं सर्वसागरान्तिमत्वादस्याऽसङ्ख्येयद्वीपसमुद्रविस्तारसागरमनं स्पर्धते स्वपरिमाणेन परामवितुमिच्छतीत्येवंशीलं स्वयम्भूरमणाख्यसागरसङ्ख्याऽपेक्षयाऽप्यधिकपरिमाणं करुणया परतु स महार्णवच्छा, तदास्य रसवारि स्वादुसलिलम्, करुणारूपो रस एव वारीति वा तेन कृत्वा, निःसीमकारुण्यमेतत्। एतेन भगवान् करुणासमुद्र इति भण्यते। यद्वा करुणारसवारिणा कृत्वा स्वयम्भूरमणस्पर्धी अनन्तजिदित्यन्वयः। स्वयम्भूरमणसमुद्रपरिमाणाऽपेक्षयाऽप्यधिकपरिमाणकरुणारसवारिपूर्ण इति समुदायपरमार्थः। अत एव, वः = युष्माकम्, अनन्ताम्=शाश्वतीमनन्तां सर्वकर्मपरिक्षयोपलब्धाम्, सुखश्रियम्= सुखस्य श्रीः समृद्धिस्ताम् अविनश्वरसुखसम्पदमिति समुदायार्थः।

प्रयच्छतु=वितरत्विति प्रार्थये। यो ह्यनन्तकरुणापूर्णोऽनन्तजिच्च, तत एवाऽनन्तसुखलाभसम्भवः, यदुक्तम्—"पूर्णात्पूर्णमुदच्यत" इति भाव। उपमानादुपमेयस्याऽऽधिक्यवर्णनाद्व्यतिरेकाऽलङ्कार.॥ १६॥

अथ पञ्चदश धर्मनाथजिन स्तुवन्नाह—

**कल्पद्रुमसधर्माणमिष्टप्राप्तौ शरीरिणाम्।**
**चतुर्धा धर्मदेष्टार धर्मनाथमुपास्महे॥ १७॥**

कल्पद्रुमेति। **शरीरिणाम्**=प्राणिनाम्, "प्राणी तु चेतनो जन्मी जन्तुजन्युशरीरिण" इत्यमर। **इष्टप्राप्तौ**=इष्टस्याऽभिलषितार्थस्य प्राप्तौ लाभे, **कल्पद्रुमसधर्माणम्**=कल्पद्रुमस्य, समानो धर्मो यस्य स सधर्मा सदृशस्त तादृशम्, कल्पवृक्षवदिष्टप्रदमिति मिलितार्थ। तत्र हेतुगर्भ विशेषणमाह—**चतुर्धाधर्मदेष्टारम्**=चतुर्धा दानशीलतपोभावभेदाच्चतुर्विधो यो धर्म उपलक्षणत्वात्तत्सञ्चयहेतुरनुष्ठानादि॰, कारणे कार्योपचाराद्दानक्रियादिरपि धर्म। त दिशत्युपदिशतीति स तादृशस्तम्। चतुर्धाधर्माऽऽराधनेन प्राणिना सकलेष्टसिद्धि, इष्टो हि धर्म एव तेषाम्। तल्लाभे चैष एव कल्पतरु, अन्यत्र प्रयस्याऽपि स दुरापश्चेति भाव। विशेष्यमाह—**धर्मनाथम्**=तदाख्य पञ्चदश तीर्थङ्करम्, अस्मिन् गर्भस्थे मातुर्धर्मक्रियादोहदभावात्तदनुसारेण पितृभ्या धर्मनाथेति कृताऽभिख्यम्, चतुर्धा धर्मदेशकत्वाद्धर्मस्य नाथ इत्येवमन्वर्थाऽभिधम्, **उपास्महे**=भजामहे। धर्माऽभीप्सूना धर्मदेष्टा धर्मनाथ एव शरणमिति भाव॥ १७॥

अथ षोडशं शान्तिजिनं स्तुवन्नाह—

सुधासोदरवाग्ज्योत्स्नानिर्मलीकृतदिङ्मुखः ।
मृगलक्ष्मा तमःशान्त्यै शान्तिनाथजिनोऽस्तु वः ॥१८॥

सुधेत्यादि । सुधासोदरवाग्ज्योत्स्नानिर्मलीकृतदिङ्मुखः= सुधाऽमृतं तस्यास्तृप्तिप्रदत्वान्मुक्तिमार्गादिप्रतिपादनेन कृत्वाऽमरत्व-प्रदत्वाद्दुर्लभत्वाच्च सोदरा सदृशी या वाग् देशनावाण्येव सुधासम्बन्धेन निर्मलीकरणात्मना च तादात्म्याज्ज्योत्स्ना चन्द्रिका, "चन्द्रिका कौमुदी ज्योत्स्ना" इत्यमरः । तया कृत्वा निर्मलीकृतानि कर्मक्षयोपशम-प्रदर्शनेन कृत्वा कर्ममलरहितानि तमोगुणप्राबल्यतमसोऽभावाच्च प्रसन्नानि कृतानि दिशां ककुभां मुखानि मुखावयवाः सितत्वात्पुरोभागा तात्स्थ्यात्तच्छब्दबोध्यत्वाद्दिगन्तवासिनः प्राणिनश्च येन स तादृशः । "दिशस्तु ककुभः काष्ठा" इत्यमरः । ज्योत्स्नाभि र्हि दिशो निर्मली-करणमुचितमेव । यथा ज्योत्स्नाभिर्दिगन्तपर्यन्तं प्रकाश्यते तथा वाचा सर्वे भावात्मना प्रकाश्यन्ते । प्रकाशेनेव ज्ञानेन तमसोऽज्ञानस्य समुन्मूलनादिति तात्पर्यम् । एतेन तमःशान्तिसाम्यमीसाकल्यमुक्तम् । अत एव कर्मनौल्यात्साधर्म्यात् मृगलक्ष्मा=मृगो हरिणः स एव लक्ष्म लाञ्छनं यस्य स तादृशो हरिणलाञ्छनश्चन्द्ररूपश्च । शान्ति जिनस्य मृगो लाञ्छनमिति प्रसिद्धमेव । हिमांशुश्चन्द्रमाश्चन्द्र इन्दुः कुमुदबान्धवः ... मौर्मृगाङ्क कलानिधिरि ति "कलङ्काङ्कौ लाञ्छनं च चिह्नं लक्ष्म च लक्षणम्" इ ति चामरः । विशेष्यमाह—शान्तिनाथजिनः=शान्ति-रस्त्यस्य षोडशतीर्थङ्कर अस्मिन् गम्ये लोके सर्वोपद्रवशान्ति

र्जतेति पितृभ्यां तदनुसारेण शान्तिरिति कृताऽभिख्य शम्यादित्या-शास्यमानः, स एव सन्मार्गोपदेशादिना पालकत्वान्नाथ इव नाथ. स्वामी, स चाऽसौ जयति रागादीनिति जिनः, स तादृश । वः=युष्माकम्, तमःशान्त्यै=तमसोऽन्धकारस्य वस्तुयाथात्म्याऽवबोधप्रतिपन्थित्वसा-धर्म्यादुपचारादज्ञानस्य च शान्त्या उपशमाय, तमोनाशायेत्यर्थः। प्रबोध-प्रकाशायेति यावत् । अस्तु=भवत्विति प्रार्थये । यो हि शान्तिनाथ-स्तत एव तम शान्तिप्रार्थनमनुगुणम् । ज्योत्स्नाद्योतितदिङ्मुखश्च मृगलक्ष्मा तम शान्त्यै भवत्येवेति शान्तनाथस्तुतिरवश्यफलप्रदेति ध्वन्यते । परम्परितरूपकाऽलङ्कारस्तस्य चोपमाऽङ्गम् ॥ १८ ॥

अथ सप्तदश कुन्थुजिनं स्तुवन्नाह—

**श्रीकुन्थुनाथो भगवान् सनाथोऽतिशयर्द्धिभि ।**
**सुरासुरनृनाथानामेकनाथोऽस्तु व श्रिये ॥ १९ ॥**

श्रीकुन्थुनाथ इति । सुरासुरनृनाथानाम्=सुराश्चाऽसुराश्च नरश्च तथा तेषामेव नाथाश्च, यद्यपि सुरादिनाथा अपि सुरादय एवेति पृथङ्नाथोक्तिर्गतार्था, तथापि ब्राह्मणवशिष्ठन्यायेन पृथगुक्तिर्बोध्या। सुरनाथादिनाथश्च जगन्नाथ एवेति तिर्यगाद्यनुक्तेर्न न्यूनता । सुरादीन् विहाय तन्नाथानामेव तात्पर्यविषयत्वे च न्यूनता समापद्यत एव, नहि सुरादिनाथनाथ एव कोऽपि न तु सुरादिनाथ इति युक्तिमत् । यद्वा य सुरादिनाथनाथ स सुरादिनाथ सुतरामिति यथेष्ट व्याख्येय न काऽपि निर्बन्ध । तेषा देवदानवमानवेन्द्राणाम् । एकनाथः=एको द्वितीयस्य तादृगस्याऽभावादेकमात्र स्वयमनाथत्वाच्च प्रधानं च नाथ.

श्रीसम्पन्नत्वादिना स्वामीव स तादृशः सर्वजनानाम् इति निष्कर्षः । तत्र हेतुगर्भं विशेषणमाह — अतिशयर्द्धिभिः=अतिशेते लोकानेभिरित्यतिशया अलौकिकाऽनितरसाधारणगुणा प्रसिद्धा सहजाद्यतिशय, तस्य ऋद्धयोऽतिविपुलत्वम् । यदुक्तम् — 'स्वामिन् ! सहस्रजिह्वोऽपि शक्तो वक्तुं न ते गुणान्' इति । अतिशया एव ऋद्धयः सम्पत् इति या ताभिः कृत्वा सनाथः=समन्वितः लोकेऽपि हि सुरादिनाथोऽन्यापेक्षया कतिपयाऽतिशयसम्पन्नो भवति अयं त्वतिशयर्द्धिभिः सनाथ इति सुरासुरनृनाथानामेकनाथो भवत्येवेति भावः । अत एव भगवान्=भग ऐश्वर्यादिसद्वान्, भगस्तत्मूलैश्वर्यादिसमग्र इत्यर्थः । "ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः । ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणे" इत्युक्तरिति बोध्यम् । विशेषणमाह — श्रीकुन्थुनाथः=श्रीसमन्वितः कुन्थुनामेत्यास्य सप्तदशतीर्थङ्कर, अस्मिन् गर्भस्थे सति माता कुन्थुनामकरत्नराशिदर्शनात्तदनुसारेण पितृभ्यां कुन्थुनाथेति कृताऽभिधास्य वः=युष्माकम्, श्रिये=ज्ञानादिसम्पदे अस्तु=भवत्विति प्रार्थये । अ. सर्वश्रीसम्पन्नः स एव श्रिये भवितुमर्हतीति भावः ॥ १९ ॥

अथाऽष्टादशमरनाथजिनं स्तुवन्नाह—

अरनाथः स भगवांश्चतुर्थाऽरनभोरविः ।
चतुर्थपुरुषार्थश्रीविलासं वितनोतु वः ॥ २० ॥

अरनाथ इति । सः=जगति चतुर्थपुरुषार्थप्रदत्वेन ख्यातः, चतुर्थाऽरनभोरविः=चतुर्थो द्वादशारे कालचक्रे तुरीयो योऽरस्तत्-

स्याऽर इव भाग इत्यर इति ख्यातश्चतुर्थोंऽशो दु षमसुषमाऽरः, स एवाररविणाऽधिष्ठीयमानत्वाज्ज्ञानादिप्रभया प्रकाश्यमानत्वाच्च नभो गगनम्, "नभोऽन्तरीक्ष गगनमि"त्यमर.। तस्य तत्प्रकाशकत्वात्तदधिष्ठानत्वाच्च तत्सम्बन्धी रवि प्रकाशकत्वादिसाधर्म्याद्रविरूप·। सूर्यो यथा गगने सर्वताराग्रहाद्युत्कृष्ट सर्वलोकप्रकाशकश्च, तथाऽरनाथोऽपि चतुर्थारे सर्वोत्कृष्ट सर्वप्राणिप्रबोधोद्बोधकश्चेति भाव.। कुत इत्याकाङ्क्षानिवृत्तये आह—**भगवान्**=ऐश्वर्यादिरूपभगसम्पन्न, यो हि भगवान् स लोकोत्तमो भवत्येवेति हृदयम्। अत एव, **सः**=सर्वजगत्ख्यात, विशेष्यमाह—**अरनाथः**=तदाख्योऽष्टादशस्तीर्थङ्कर·, अस्मिन् गर्भस्थे मात्रा स्वप्ने चक्रारदर्शनात्पितृभ्या तदनुसारेणाऽर इति कृताऽभिख्य:, **वः**=युष्माकम्, **चतुर्थपुरुषार्थश्रीविलासम्**=चतुर्थो य. पुरुषस्याऽर्थ. प्रयोजनं धर्माऽर्थकाममोक्षेष्वन्त्यो मोक्षनामा पुरुषार्थस्तस्य या श्री शाश्वताऽखण्डानन्दादिलक्ष्मी., अथवा तद्रूपा या श्रीस्तस्या विलास प्राकट्येन सान्निध्यम्, तम्, **वितनोतु**=उपदेशादिना सज्ज्ञानप्रदानेन कृत्वा सम्पादयतु। चतुर्थस्यस्य चतुर्थप्रदत्वमनुगुणमेव। किं च स एव चतुर्थपुरुषार्थप्रद, यदुक्तम्—"जगन्ति भिन्दन्तु सृजन्तु वा पुनर्यथा तथा वा पतय प्रवादिनाम्। त्वदेकनिष्ठे भगवन्! भवक्षयक्षेमोपदेशे तु पर तपस्विन·" इति भाव.। परम्परितरूपकाऽलङ्कार.॥ २०॥

अथैकोनविंश मल्लिजिनं स्तुवन्नाह—

**सुरासुरनराधीशमयूरनववारिदम्।**
**कर्मद्रून्मूलने हस्तिमल्लं मल्लिमभिष्टुम ॥ २१ ॥**

सुरासुरेति—सुरासुरनराधीशमयूरनववारिदम्=सुराश्चासुराश्च नराश्च तेषामेवाऽधीशा इन्द्राश्च सुरासुरनराधीशा एव मयूरा बर्हिणः, "मयूरो बर्हिणो बर्ही शुक्लापाङ्ग शिखावल" इत्यमरः । तेषां नवो-ऽपूर्वः, इतरविलक्षणहर्षप्रदत्वादितिभावः । स चासौ ज्ञानादिसम्पत्ति मधुरतरसलिलसम्भृतत्वान्नव्यश्च वारिदो मेघस्तद्रूप इत्यर्थः । मयूरो हि प्रथमं सलिलसम्भृतमुन्नतं वारिदं दृष्ट्वा हृष्यति केकारवं करोति नृत्यति च । सुरादयश्चाऽपि भक्तिभिर्नं दृष्ट्वा हृष्यन्ति जयजयारवं कुर्वन्ति नृत्यादि च कुर्वन्ति । तस्य हि शास्त्रीयमिति सुपूर्वं मयूरनववारिद मिति । सुरादिमयूरनववारिदत्वे हेतुगर्भं विशेषणमाह—कर्मद्रुमुन्मूलने =कर्माण्येव द्रव्यद्रुमस्य ज्ञानावरणादिनानाप्रशाखासमवत्त्वात् दुर्निवेध्य-ऽनिष्टफलत्वाच्च द्रुमो द्रुमास्तेषां ज्ञानचारित्रादिना स्वकीयानां परकीयानां च सन्मार्गोपदेशादिनाऽन्मूलने मूलमुत्पाटने विषये, विनाशन इत्यर्थः । हस्तिमल्लम्=ऐरावणाख्यं गजेन्द्रम्, तद्रूपमित्यर्थः । गजेन्द्रस्य हि द्रुमोत्पाटनं प्रसिद्धमेव । एतेन कर्मनाशनं तस्य सुकरमिति व्यज्यते । बलातिशयादपि गजेन्द्रोऽनतिप्रयासेनैव द्रुममुन्मूलयतीति बोध्यम् । यदुक्तम् "स्वतो माऽन्यः कर्मद्रुमुन्मूलकी मूलत" इति । 'ऐरावतो हस्तिमल्लः श्वेतगजोऽभ्रमुप्रियः' इति हैमः । कर्मक्षपितानां हि तापक्लान्तानां मयूराणां तापनाशको वारिद इव कर्मद्रुमोन्मूलको भक्तिरिति द्रष्टव्यम् । अत्र वारिदरूपस्य द्रुमपोषकत्वाऽनुपपन्नस्य द्रुमोन्मूलकहस्ति-मल्लतया रूपणमसमञ्जसमिव प्रतिभातीति समाक्षेपणीयम् । विशेष्यमाह—भक्तिम्=उपास्यमनभिव्यक्तीर्णकत्वम्, यस्मिन् गर्भस्थे मातुः पुण्य मात्मजस्यनयोदयाद्वदनुसारेण पितृभ्यां भक्तिरिति ख्यापितम्,

अभिष्टुम =गुणकीर्त्तनेन कृत्वा तदाभिमुख्यं साधयामः । आनन्द-लाभार्थं कर्मोन्मूलनार्थं चेति तादृशविशेषणमहिम्ना प्रतीयते ॥ २१ ॥

अथ विंशतितम मुनिसुव्रतजिन स्तुवन्नाह—

**जगन्महामोहनिद्राप्रत्यूषसमयोपमम् ।**
**मुनिसुव्रतनाथस्य देशनावचनं स्तुम ॥ २२ ॥**

जगदिति । **जगन्महामोहनिद्राप्रत्यूषसमयोपमम्** = जगत-स्तात्स्थ्यात्ताच्छब्द्याज्जगज्जन्तूना यो महाननादिकालप्रवृत्तत्वादुत्कट-त्वाच्च दीर्घो गाढश्च यो मोहोऽनात्मनि ममत्वबुद्धि , यदुक्तम् "अनित्य-घनदेहादौ नित्यत्वेन ममेति च । अज्ञानेनाऽऽवृता बुद्धिर्मोह इत्यभि-धीयते" इति । स एव सत सज्ज्ञानस्याऽन्तरायत्वात्तदागमप्रतिपन्थि-त्वाच्च निद्रा शयनमिव, "स्यान्निद्रा शयन स्वाप" इत्यमर । तस्या निवर्त्तन-साधनलक्षणेन सम्बन्धेन तत्सम्बन्धी यत्प्रत्यूषोऽहर्मुखम् , "उषसि प्रबुद्ध्येते" त्युक्तेरिति भाव. । "प्रत्यूषोऽहर्मुखं कल्यमि" त्यमरः । तदात्मक समय काल , दिवसस्य पञ्चपञ्चाशत्तमघटिका । यदुक्तम् "पञ्च पञ्च ऊष काल. सप्त पञ्चाऽरुणोदय । अष्टपञ्च भवेत्प्रात.शेष. सूर्योदय स्मृत" इति । स निवर्त्तकत्वसाधर्म्यादुपमा यस्य तत्तादृशम् । यथा प्रत्यूषकालेन निद्राविलयो ज्ञानागमश्च, तथा मुनिसुव्रतवचनेन मोहव्यपोह सज्ज्ञानलाभश्चेत्यर्थ । **मुनिसुव्रतनाथस्य**=मुनिसुव्रतस्त-दाख्यश्चाऽसौ मोहनाशाद्यर्थमाशास्यमानत्वान्नाथश्च तस्य तदाख्यस्य विंशतितमतीर्थङ्करस्य, अस्मिन् गर्भस्थे मातुर्मुनेरिव सुव्रतभावात्तदनु-सारेण पितृभ्यां मुनिसुव्रतेति कृताऽभिख्यस्य, तदुच्चरितत्वेन तत्सम्बन्धी-

क्रियासाम्यात्स्वकण्ठरवोक्तनिर्मलीकारक्रियासाम्याच्चाऽत्रोपमाऽलङ्कारः । अत्रोपेक्षा वर्णयन्तस्त्वलङ्कारमर्मणा दत्ताऽर्धचन्द्रा एव । उपमाप्रयोजकोभयसामान्यक्रियायाः स्वयमेवोक्तेः । प्रकृतस्य परात्मना सम्भावनमुत्प्रेक्षा, न तु सामान्यधर्मोक्तिपुरस्सरं साम्यप्रतिपादनम् । उत्प्रेक्षायामपि साम्यं मूलमित्यन्यदेतत् । यथा हि मूर्ध्नि लुठद्भिर्वारिपूरैः स्नानादौ शरीरस्य मलाऽपकर्षणेन कृत्वा निर्मलता, तथा मूर्ध्नि लुठद्भिः पादनखांशुभिस्तेषां पुण्यत्वात्कर्ममलाऽपकर्षणत आत्मनः शुचितेति तत्त्वम् ॥२३॥

अथ द्वाविंशमरिष्टनेमिजिनं स्तुवन्नाह—

**यदुवंशसमुद्रेन्दुः कर्मकक्षहुताशनः ।**
**अरिष्टनेमिर्भगवान् भूयाद्वोऽरिष्टनाशनः ॥ २४ ॥**

यदुवंशेति । **यदुवंशसमुद्रेन्दुः**=यदूनां यदुनामनृपाऽपत्यानां यो वंशः सन्तानः, "वंशोऽन्ववायः सन्तानः" इत्यमरः । स एवाऽतिमहत्त्वात्तल्यातिसलिलराशिपूर्णत्वादसङ्ख्यातपुरुषरत्नादिसम्भृतोदरत्वाच्च समुद्र इव, तस्य तद्वर्धकत्वात्तद्भवत्वाच्च तत्सम्बन्धीन्दुश्चन्द्र इव, चन्द्रः समुद्रोद्भवः समुद्रवर्धकश्च प्रसिद्धः, तद्वदयमपि । यदुवंशवर्धको यदुवंशोद्भवश्चेत्युपमा । तथा, **कर्मकक्षहुताशनः**=कर्माणि शुभाऽशुभानि कक्षा वनानि, "कान्तारं विपिनं कक्षं स्यात्षण्डं काननं वनमि"ति हैमः । तस्य तन्नाशकत्वात्तत्सम्बन्धी हुताशनो वह्निरिव, स तादृशः । हुताशनो वनमिवाऽयं कर्माणि स्वीयानि चारित्रादिना परकीयाणि च तथाविधोपदेशादिना नाशयतीति भावः । ननु स क इत्यपेक्षायामाह—**भगवान्**= ऐश्वर्यादिरूपप्रशस्तमूमभगसम्पन्नः,

एतेन विशेषणेन स्वेष्टसिद्धिसम्पादकोक्ता, भगवत एवेष्टसिद्धिसम्पादकत्वं बोध्यम् । अरिष्टनेमिः=द्वाविंशो द्वाविंशतीर्थङ्करः, यस्मिन् गर्भस्थे मात्राऽरिष्टरत्नमयचक्रधारा ऽस्य स्वप्ने दृष्टा तदनुसारेण पितृभ्यामरिष्टनेमिरिति कृतनामास्य । वः=युष्माकम्, अरिष्टनाशनः=अरिष्टमाध्यात्मिकमाधि- दैविकाऽऽधिभौतिकमुपसर्गं सदुपदेशादिना ऽभिनिवारयितुं शीलमस्येति स तादृश, सर्वोपसर्गोत्सारक इत्यर्थः । "उपसर्गः स्मरिष्टं स्यादुपसर्ग उपद्रव" इति हैम । भूयात्=भवत्वित्याशासे । एतेन अरिष्टस्य चक्रादिनेमिवद्भिदारणादरिष्टनेमिरित्यन्वर्थोऽभिधेयता ध्वनिता । नामभेदम, रूपकपरतया व्याख्याने तु नामरूपक बोध्यम् ॥ २४ ॥

अथ श्रेयोऽर्थिनां पार्श्वनाथजिनं स्तुवन्नाह—

कमठे धरणेन्द्रे च स्वोचितं कर्म कुर्वति ।
प्रभुस्तुल्यमनोवृत्तिः पार्श्वनाथः श्रियेऽस्तु वः ॥ २५ ॥

कमठ इति । स्वोचितम्=तस्य तस्य कमठस्य धरणेन्द्रस्य च यदुचितमभ्यस्तं न्याय्यं योग्यं च तथाभूतम् स्वस्वभावस्यानुरूपमित्यर्थः । 'न्याय्ये ऽप्युचितं न्याय्यमि'त्यमर । कर्म=व्यापारः तत्र कमठस्याऽ- सुरविशेषस्य परापकारविधानाभ्यासात्तथाप्रधानप्रकृतितया परोपसर्ग- करणादेरेव तदनुगुणत्वात् स्वोचितत्वादिति पार्श्वनाथप्रभोः प्रतिमस्थस्य सतु उपसर्गरूपं कुर्वतीत्यर्थः । धरणेन्द्रपक्षे च-तस्य देवप्रकृति- तया सत्त्वप्रधानतया परोपकारकरणाभ्यासात्परदुःखविमोचनादि व्यापारस्यैव च तदनुगुणत्वा च पार्श्वप्रभो कमठविहितोपसर्गनिवारणात्मकं सत्कर्म च कुर्वति=अनुतिष्ठति, कमठे=तदाख्यासुरविशेषे धरणेन्द्रे

=जिनभक्ते तदाख्ये नागराजविशेषे, चः समुच्चये, तेन स्वोचितं कर्म कुर्वतीत्यस्योभयत्राऽन्वयः। तुल्यमनोवृत्तिः=तुल्या मध्यस्थतयाऽपकारिणि द्वेषरहितोपकारिणि च रागरहिता च मनोवृत्तिर्भावोऽभिप्रायो यस्य स तादृशः, समतामतिरित्यर्थः। वीतराग इति यावत्। इदमसाधारणमलौकिकं च वैशिष्ट्यं यदपकारिणि न द्वेष उपकारिणि च न राग इति भावः। विशेष्यमाह—पार्श्वनाथः=तदाख्यस्त्रयोविंशस्तीर्थङ्करः, अस्मिन् गर्भस्थे तमस्विन्यामपि रात्रौ मात्रा पार्श्वतो गच्छतः सर्पस्याऽवलोकनात्पितृभ्यां तदनुसारेण पार्श्व इति कृताऽभिख्य, प्रभुः=स्वामी, एतेन तस्य समता नाऽशक्तस्येति मनोरथसिद्धिसम्भावना च सूच्यते। वः=युष्माकम्, श्रिये=लक्ष्म्यै, अस्तु=भवतु। यो हि वीतरागस्तत एव चिन्तामणिवत्प्रार्थनासिद्धिरिति तात्पर्यम्। पार्श्वनाथप्रभौ प्रतिमामास्थिते तद्ध्यानभङ्गाय पूर्वजन्मवैरिणा कमठदानवेनोपसर्गः कृतः। प्रभोः परमोपासकेन नागराजेन धरणेन्द्रेण च स निवारित इति कथामनुसन्धायैषा स्तुतिरिति बोध्यम्॥ २५॥

अथ चरमजिन श्रीमहावीरस्वामिनं स्तुवन्नाह—

**कृताऽपराधेऽपि जने कृपामन्थरतारयोः।**
**ईषद्बाष्पार्द्रयोर्भद्रं श्रीवीरजिननेत्रयोः॥ २६॥**

इति कलिकालसर्वज्ञश्रीहेमचन्द्राचार्यविरचित सकलाऽर्हत्स्तोत्र समाप्तम्॥

कृतेति। कृताऽपराधे=कृतो विहितोऽपराधो मन्तुर्विविधोपसर्गरूपो येन स तादृशस्तस्मिन्, अनिष्टाऽऽचरणेनाऽपराधिनि, अपि-

श्रमःस्थगित इव जातः स सुरः स्वस्थानं गन्तुमुपक्रान्तो "हन्त! कथमस्य सुगतिर्भविते"ति तच्चिन्तया कृपया निश्चलाभ्यामश्रुस्निग्धाभ्या भगवता ददृशे। तत्स्थितिमनुसन्धाय स्तुतिरेषा जिनस्य निष्कारण-कारुणिकत्वसूचनाय प्रवृत्ता। एतेन स्वस्मिन्नपि प्रभोस्तादृशदृष्टिप्रार्थन ध्वन्यते ॥ २६ ॥

इति कलिकालसर्वज्ञश्रीहेमचन्द्राचार्यविरचिते सकलाऽर्हत्स्तोत्रे श्रीतपोगच्छाऽधिपतिशासनसम्राट्कदम्बगिरिप्रभृत्यनेकतीर्थोद्धारकाऽऽचा-र्यवर्यश्रीविजयनेमिसूरीश्वरपट्टालङ्कारसमयज्ञशान्तमूर्त्याचार्यवर्यश्रीविजय-विज्ञानसूरीश्वरपट्टधरसिद्धान्तमहोदधिप्राकृतविद्विशारदाचार्यवर्यश्रीविजय-कस्तूरसूरीश्वरशिष्यपन्यासश्रीकीर्तिचन्द्रविजयगणिविरचिता कीर्तिकला-ख्या व्याख्या समाप्ता ॥

# ॥ श्रीवीरजिनस्तोत्रम् ॥

अथ परिशिष्टपर्व प्रारिप्सुनाऽनेनैव कलिकालसर्वज्ञेन श्रीहेम-चन्द्राचार्येण प्ररिप्सितपरिसमाप्तिकामेन विघ्नविघाताय कृत चतुःश्लोका-त्मक श्रीवीरजिनस्तुतिरूपं मङ्गलमपीह प्रसङ्गाद्व्याख्यायते। तत्राऽयमाद्य. श्लोक —

**श्रीमते वीरनाथाय सनाथायाऽद्भुतश्रिया।**
**महानन्दसरोराजमरालायाऽर्हते नमः ॥ १ ॥**

श्रीमत इति। अर्हते=अर्हति पूजा सुरादिकृतामित्यर्हन्, तस्मै तीर्थङ्कराय सुरासुरादिपूजिताय, यतश्चाऽर्हन्नत एव, अद्भुतश्रिया=अद्भुत-याऽसाधारणयाऽलौकिकया च। असाधारणमलौकिकमेव चाऽद्भुत भव-

श्रीगुरुवत्त्वेन स्तुत्वा ज्ञानिमुख्यत्वेन स्तुवन्नाह—

**सर्वेषां वेधसामाद्यमादिमं परमेष्ठिनाम् ।**
**देवाऽधिदेव सर्वज्ञं श्रीवीर प्रणिदध्महे ॥ २ ॥**

सर्वेषामिति । **सर्वेषाम्**=सकलानाम्, न तु कतिपयानामेवेति बोध्यम् । **वेधसाम्**=ज्ञानिनाम्, **आद्यम्**=आदौ भवस्तम्, आदौ गणनीयं कीर्त्तनीय चेत्यर्थः । मुखमिवाऽङ्गेषु प्रधानत्वान्मुख्यमिति वाऽर्थः । मुख्यो ह्यादौ प्रथममेव कीर्त्यते गण्यते चेति बोध्यम् । यद्वा—**सर्वेषाम्, वेधसाम्**=वहुवचनादुपलक्षणत्वाद्वेधा ब्रह्मेन्द्र', शेषाश्चेन्द्रास्तेषा पूज्यत्वादादौ भवमिव । अथवा, **वेधसः**=प्रजापतयस्तेषामाद्यं प्रथमम्, ऋषभप्रभु ह्याद्य. पृथिवीनाथ, अर्हतां च सर्वेषामभेदः, यदुक्तम्—"यत्र तत्र समये यथा तथा योऽसि सोऽस्यभिधया यया तया । वीतदोषकलुष स चेद्भावनेक एव भगवन्नमोऽस्तु ते" इति । तथा—**वेधसो** विष्णवस्त्रिपृष्ठादयो वासुदेवा अर्धचक्रिणस्तेषामाद्य प्रथमम् । भरतपुत्रो मरीचिर्हि प्रथमस्त्रिपृष्ठाख्यो विष्णु, मरीचिजीव एव च चरमोऽर्हन्निति श्रुतज्ञा । अत· श्रीवीरजिन एव वेधसामाद्य । "स्रष्टा प्रजापतिर्वेधा" इत्यमर । "विष्णुर्जिष्णुजनार्दनौ .... वभ्रुशशविन्दुवेधस" इति हैमः । न केवलमसौ संसारिणामेवाऽऽद्योऽपि त्वससारिणामपीत्याह—**परमेष्ठिनाम्**=परमे लोकोत्तरत्वात्सर्वोत्तमे भावे=पर्याये तिष्ठन्तीति परमेष्ठिन. पञ्चाऽर्हत्सिद्धाचार्योपाध्यायसाधवस्तेषाम्, **आदिमम्**=आदौ भवम्, अतिशयाद्यसाधारणगुणविशिष्टतया निर्हेतुकपरमकारुणिकतया सर्वजगदुपकारकतया च

निमित्तमिति बोध्यम् । तस्या गङ्गायास्तत्प्रभवत्वात्तत्सम्बन्धी यो हिमाचलो हिमालयाख्यो नगाधिराजस्तद्रूपम् । यथा हि हिमवतो गङ्गा प्रभवति तथा वीराच्छ्रुतानि, तथा यथा हिमाचलो नगाधिराजस्तथा वीरो ज्ञानीन्द्र इति रूपकेण ध्वन्यते । अत्राऽपि परम्परितरूपकम् । अत एव, विश्वाम्भोजरविम्=विश्व जगदेव विकास्यत्वसाधर्म्या-दम्भोज कमल तस्य तद्विकासकत्वात्तत्सम्बन्धी रविः सूर्यस्तद्रूप, तम् । यथा रविणाऽम्भोज तथाऽनेन विश्व प्रबोध्यत इति परम्परितरूपकम् । अत एव, देवम्=देवाधिदेवम्, विनाऽपि प्रत्यय पूर्वोत्तरपदयोर्लोप इति ध्येयम् । श्रीज्ञातनन्दनम्=श्रीसमन्वितश्चाऽसौ ज्ञातस्य तथा-ख्यातस्य ज्ञातकुलस्येक्ष्वाकुविशेषस्य नन्दन आनन्दप्रदस्तम्, तत्रोत्पन्न-त्वात्तदुत्कर्षकत्वाच्चेति भाव । चरमजिनेश्वरं श्रीवीरमित्यर्थ । वन्दे= नमामि, यथा कल्याणश्रुतबोधलाभः स्यात्, तस्यैव तन्निदानभावादिति हृदयम् ॥ ३ ॥

सम्प्रत्यन्त शुद्ध्यर्थं वचनद्वारा चरमजिन स्तौति—

**पान्तु वः श्रीमहावीरस्वामिनो देशनागिरः ।**
**भव्यानामान्तरमलप्रक्षालनजलोपमाः ॥ ४ ॥**

इति कलिकालसर्वज्ञश्रीहेमचन्द्राचार्यविरचित श्रीवीरजिनस्तोत्र समाप्तम् ॥

पान्त्विति । भव्यानाम्=अनादिपारिणामिकभव्यत्वभाववताम्, अभव्यभिन्नानामित्यर्थ । सेत्स्यता सम्यक्त्ववतामिति परमार्थ । आन्त-रमलप्रक्षालनजलोपमाः=आन्तरमन्तर्भवमात्मसम्पृक्तमित्यर्थ । तादृशं यन्मलं विकार कर्म वा कषायादिर्वा, पक्षे शरीरसश्लिष्टरज.प्रभृतिकं

च । तस्य मलस्याक्षालने परिशोधने, दूरीकरणे इति यावत् । जलं सलिलमुपमीयमानं यासां ता जलोपमाः, आत्मसम्बन्धिकर्मकषायादिमलक्षालने सलिलसमानीत्यर्थः । यथा जलेन शरीरादिसम्पृक्तमलस्य शोधनं तथा जिनेश्वरदेशनाश्रवणेनाऽऽन्तरमलस्यैवेति भावः । जलेन हि मलशोधनं प्रसिद्धमिति स्पष्टम् । यद्यप्यान्तरमलेऽपि विशोधनस्य मम सापेक्षत्वादसामर्थ्यम्, तथापि देशनस्य गुरुकुलवासादिवदुपकारात्समासो बोध्यः । श्रीमहावीरस्वामिनः=श्रीसन्मतिनो महावीरस्य चान्तिमतीर्थङ्कर एवोपदेशादिना सन्मार्गप्रदर्शनादिना कृत्वा पालकत्वात्स्वामीव तस्य श्रीमहावीरस्य, देशनागिरः=धर्मोपदेशवचांसि, वः=युष्मान् अस्मान् पान्तु=अपायाद्रक्षन्तु । तदाराधनेन चान्तरमलप्रक्षालनात्तथा सर्वाऽपायपरिहार इति ता देशनागिरः पान्तीत्यर्थः । तद्वचनमेव शरणं रागादिपराभूतानामिति तात्पर्यम् । अत्र शरीरादिमलमान्तरमलं चाऽन्यदिति द्वयोर्भेदेऽप्यभेदाध्यवसायादतिशयोक्त्यनुप्राणितोपमा ॥ ४ ॥

इति कलिकालसर्वज्ञश्रीहेमचन्द्राचार्यविरचिते वीरजिनस्तोत्रे श्रीतपोगच्छाधिपतिशासनसम्राट्कदम्बगिरिप्रमुखानेकतीर्थोद्धारकाचार्यवर्यश्रीमद्विजयनेमिसूरीश्वरपट्टालङ्कारसमयज्ञशान्तमूर्त्याचार्यवर्यश्रीविजयविज्ञानसूरीश्वरपट्टधरसिद्धान्तमहोदधिप्राकृतविद्विशारदाचार्यवर्यश्रीविजयकस्तुरसूरीश्वरशिष्यपंन्यासश्रीकीर्तिचन्द्रविजयगणिविरचिता कीर्तिकलाख्या व्याख्या समाप्ता ॥

— ✿ —

## ॥ प्रशस्तिः ॥

वृद्धप्रगुरु **नेमि** स्तीर्थोद्धाराऽऽप्तसद्यशोनिचयः ।
शासनसम्राड् जातो भविकुलकैरवकलानाथः ॥ १ ॥
तत्पट्टालङ्कारो वहुविधविरुदावलीपात्रम् ।
**विज्ञानः** प्रगुरु र्मे समयज्ञः शान्तमूर्त्तिश्च ॥ २ ॥
सुगुरु र्मे **कस्तूरः** प्राकृतविद्विशारदः सूरीशः ।
नव्यभव्याऽब्जबन्धुः सिद्धान्तमहोदधिर्गीतः ॥ ३ ॥
तत्कृपोपेतसुमतिः कीर्तिकला **कीर्तिचन्द्रो**ऽहम् ।
सकलाऽर्हत्स्तोत्रस्य व्याख्या स्वाख्या समाख्यमिमाम् ॥ ४ ॥
केऽपि द्रक्ष्यन्तीमामुपेक्षयाऽहङ्कृतिच्छलिताः ।
कष्ट मनसि दहेयु र्हा! मात्सर्यं दुरन्ततमम् ॥ ५ ॥
वराकोऽसूययाऽसौ द्विगुणितनीलाऽऽननो न वचनीय ।
स्वकृतं सद्यो भुङ्क्ते दैवहतस्याऽपहत्याऽलम् ॥ ६ ॥
तोपमेष्यन्त्यवश्य गुणगृह्या प्रेक्ष्य तामेताम् ।
व्याख्यासु सतीषु कतिषु सुमेषु कह्लारमिव भृङ्गाः ॥ ७ ॥
रसशीतांशुखनयने वैक्रमवर्षे समाप्तिमाप्तेयम् ।
मौन्यामेकादश्या सकलाऽर्हद्व्योऽर्हणा भूयात् ॥ ८ ॥
नेतः कीर्तिमपेक्षे पाठकजनमनःप्रसाद तु ।
तदर्हतो भक्तानपि सद्भक्त्येह प्रपन्नोऽस्मि ॥ ९ ॥

इति कीर्तिकलाव्याख्यासहित श्रीसकलाऽर्हत्स्तोत्रं श्रीवीरजिनस्तोत्रं च समाप्तम् ॥

॥ अर्हम् ॥

श्रीविजय-नेमि-विज्ञान-कस्तूर-सूरिसद्गुरुभ्यो नमः ।

कलिकालसर्वज्ञश्रीहेमचन्द्राचार्यविरचितं

# श्रीमहादेवस्तोत्रम्

## पन्यासश्रीकीर्तिचन्द्रविजयगणिविरचित-कीर्तिकलाव्याख्याविभूषितम् ।

वीतराग महादेव करुणावरुणालयम् ।
सिद्ध्येकसाधनं सद्धीप्रदं केवलिनं श्रये ॥ १ ॥

तपोगच्छनिरभ्राऽभ्रभानुं शासनचक्रिणम् ।
तीर्थोद्धाराऽऽप्तसत्कीर्तिं सूरिं नेमिं नमाम्यहम् ॥ २ ॥

समयज्ञं विज्ञानं सूरिं शान्तमूर्त्तिं प्रगुरुम् ।
शिष्यप्रशिष्यसेवितचरणद्वन्द्वं नमामि जनतेऽव्ययम् ॥ ३ ॥

सूरीशः प्राकृतविद्विशारदः शारदेन्दुसितकीर्तिः ।
कस्तूरः शरणं मे सिद्धान्तमहोदधिः सुगुरुः ॥ ४ ॥

पन्यासः कीर्तिचन्द्रोऽहं व्याख्यां कीर्तिकलाऽभिधाम् ।
करोमि श्रीमहादेवस्तोत्रस्याऽर्थविदे मुदा ॥ ५ ॥

इह हि जगति खलु लोके नानाविधाऽऽधिव्याध्यादिभिः पीडितजनो मुक्तिमिच्छुर्विविधेषूपायेषु प्रवर्तते । तत्र देवाराधनमप्युपायत्वेन प्रतिपादितं । देवाश्च बहवोऽनेकरूपगुणकर्मादिशास्त्रसम्पन्नाश्च प्रकीर्तिताः । तेषु च सर्वेभ्यो महादेव शिवमहेश्वरादिपदैः ख्यातमाहात्म्यो गीयते भक्तजनमुपास्यते च । स च कीदृक् किं गुण इत्यत्र सम्प्रदायभेदान्महान् मतभेदः । अत एव व्यामोहो मा भूदिति लोकहितेच्छुः स्वनामधन्यः कलिकालसर्वज्ञः श्रीहेमचन्द्राचार्यः शिवमहेश्वरमहादेवादिपदार्थं स्तोत्रके निरूपयिषुः महादेवाष्टकमुपक्रान्तः आदौ शिवपदार्थनिर्वचनेन कृत्वा स्तुवन्नाह—

प्रशान्तं दर्शनं यस्य सर्वभूताऽभयप्रदम् ।
माङ्गल्यं च प्रशस्तं च शिवस्तेन विभाव्यते ॥ १ ॥

प्रशान्तमिति । यस्य=यदीयम्, षष्ठ्येकवचनमित्यर्थः । दर्शनम् =अवलोकनम् प्रशान्तम्=अनुपममनुद्वेगकरं सौम्यमुपशममाधेयोपकत्वाच्चाभयञ्च, न तु तीर्थान्तरप्रसिद्धदेववत् नेत्रगात्रवक्त्रादिविकारादुग्रमुद्गरकरमसौम्यमित्यप्रशान्तमिति भावः । तथा प्रशान्तत्वादेव च सर्वभूताऽभयप्रदम्=सर्वेभ्यो न तु कतिपयेभ्य एव भूतेभ्यो जीवेभ्योऽभयं भयाऽभावं प्रददाति भयं न करोतीति तत्तादृशम्, न तु देवान्तरवच्छस्त्रादिसन्निधानात्क्रोधाद्यावेशत्वात्स्वद्वेषिघातादेश्च कदाचित्कस्याऽपि भयप्रदम् । तस्मादिमतो न जना बिभ्यतीति भावः । अत एव माङ्गल्यम्=मङ्गलविषये साधु, मङ्गलावहमित्यर्थः । न तु देवान्तरवत् शूलगदादिप्रहरणपारात्कपालमुण्डमालादिसमन्वितत्वात्

मङ्गल्यमिति भावः। एतेन दर्शनस्य मङ्गलात्मत्वं सूचितम्। स्वयमङ्गलस्य मङ्गलहेतुत्वाऽयोगादिति बोध्यम्। अत एव, **प्रशस्तम्**=वर्णनीयमदुष्टमिष्टं च, न तु दिगम्बरादिभावाज्जुगुप्सादिकरत्वादप्रशस्तमिति भाव·। एतेन दर्शनस्याऽवश्यकरणीयत्व सूच्यते। यद्धयप्रशस्त दर्शन न तत्कस्याऽपि करणीयमिति बोध्यम्। **चद्वयं** सर्वविशेषणसमुच्चये, तेन चैकैकमात्रस्याऽपर्याप्तत्व सूच्यते, एतेषा गुणानां समुदितानामेव शिवत्वप्रयोजकत्वमित्याशयाऽवगमादिति ध्येयम्। अथ च, **यस्य**=यदीयम्, यदुपज्ञमित्यर्थ·। **दर्शनम्**=पदार्थयाथात्म्यज्ञानाऽभ्युदयनिःश्रेयससिद्धयुपायभूतमार्ग, स्याद्वादरूप सिद्धान्त इति गूढाकूतम्। **प्रशान्तम्**=उपशमप्रतिपादकत्वात्कार्ये कारणोपचाराच्छान्तिप्रदमित्यर्थ·। न तु दर्शनान्तरवद् हिंसासाध्यविध्याद्युपदेशकत्वादप्रशान्तमिति भावः। तथा, **सर्वभूताऽभयप्रदम्**=सर्वभूताऽभय प्रददाति दयाऽहिंसादीना विधेयतया प्रतिपादनेन कृत्वा प्रयोजयतीति तत्तादृशम्, सर्वभूताभयोपदेशकमित्यर्थ.। न तु देवान्तरोपज्ञदर्शनान्तरवदभिचारादिप्रतिपादनेन कृत्वा भयप्रदमिति भाव। अत एव, **मङ्गल्यम्**=सम्यग्ज्ञानादिमङ्गलप्रयोजकत्वान्मङ्गलप्रयोजकम्, "नन्दी मङ्गलमि"त्युक्तेरिति बोध्यम्। अत एव चैतद्दर्शनमपि मङ्गलमिति सूच्यते। तत एव च, **प्रशस्तम्**=दर्शनश्रेष्ठम्, वस्तुयाथात्म्यप्रतिपादकत्वात्सन्मार्गप्रदर्शकत्वाच्चेति भाव। यदुक्तम् "प्रधानं सर्वधर्माणां जैनं जयति शासनमि"ति। एतेनाऽस्याऽवश्योपादेयत्व ध्वन्यते। अप्रशस्तप्रशस्तत्वयोर्हेयोपादेयत्वप्रयोजकत्वादिति बोध्यम्। **तेन**=उक्तगुणमहिम्ना, स इति यच्छब्दबलाल्लभ्यते। **शिवः**=शिव कल्याणमस्त्यस्येति स तादृशः,

महत्त्वेश्वरत्वोभययोगादिति हृदयम् । **महेश्वरताम्**=महाश्चाऽसावीश्वरश्च, तस्य भावस्तत्ता देवाधिदेवत्वमित्यर्थः । **गतः**=प्राप्तः, न तु नाममात्रेण भक्त्या श्रद्धादिना महत्त्वाद्यभावेऽपि तथाख्यात इति भाव । उक्तगुणसम्पत्तौ हेतुगर्भं विशेषणमाह—**रागद्वेषविनिर्मुक्तम्**=रागो विषयासक्ति द्वेषोऽनिष्टेऽप्रीतिरुपलक्षणत्वात्कषायादयश्च, तैर्विनिर्मुक्तमसम्पृक्तम् । तथाविधज्ञानचारित्रादिना रागादिमूलकर्मण· साकल्येन क्षयात्कारणाऽभावात्कार्यस्य सुतरामभावाद्वीतरागमित्यर्थ । वीतराग एव महानीश्वरश्चेति स एव महेश्वर । अनीदृशस्तु रागादिपरतन्त्रतया न महान्नवेश्वर इति भाव· । अत एव, **तम्**=तादृश महत्त्वादीश्वरत्वाच्च महेश्वरता गत वीतरागम्, **महेश्वरम्**=महेश्वरेत्यन्वर्थसंज्ञासञ्जिनम्, देवाऽधिदेवमित्यर्थ । **अहम्**=भक्तिश्रद्धासमन्वितो विवेकी स्तोता, **वन्दे**=नमामि । स्वात्मोत्कर्षार्थमित्यात्मनेपदेन सूच्यते । यस्त्वनीदृशो दारपरिग्रहाऽसुरहननादिना रागद्वेषपरतन्त्रः, अत एवाऽमहाननीश्वरश्च, स न वन्दनीयो विवेकिभिरिति हृदयम् ॥ २ ॥

ज्ञानादिविशेषवैशिष्ट्यादेव देवस्य महत्त्वमित्याह—

**महाज्ञानं भवेद्यस्य लोकालोकप्रकाशकम् ।**
**महादया-दम-ध्यान महादेवः स उच्यते ॥ ३ ॥**

महाज्ञानमिति । **यस्य**=यादृशस्य देवस्य, **लोकालोकप्रकाशकम्**=लोकस्य लोकवर्तित्रैकालिकसर्वद्रव्यपर्यायात्मकपदार्थसार्थस्य, तात्स्थ्यात्ताच्छब्द्यमिति बोध्यम् । अलोकस्य च प्रकाशक परिच्छेदकम्, अत एव, **महाज्ञानम्**=महत्सर्वपदार्थविषयत्वादनन्तत्वाच्छुद्ध-

त्वाच्च सर्वविदं ज्ञानं तत्, केवलज्ञानमित्यर्थः । ज्ञानान्तरं तु मति-श्रुतादिकमल्पविषयमिति न तन्महदिति बोध्यम् । भवेत्=स्यात् । य सर्वपदार्थसार्थपरिच्छेदकत्वेन केवलज्ञानवानिति सारार्थः । तथा, महा-दयादमध्यानम्=महत् सर्वजीवविषयत्वात्प्रकर्षत्वाच्च सर्वोत्कृष्टा दया, सा च सर्वेन्द्रियविषयत्वाद्विवेकसम्प्रयुक्तत्वाच्चाऽन्तःसोऽस्याप्यस्य दमः स च शुभात्मकत्वान्निर्विकल्पत्वाच्च सर्वोत्तमं ध्यानं समाधिः तेषां समाहारो दयादमध्यानम्, अस्येति भवेदिति च सम्बध्यते । दया=परदुःखप्रहाणेच्छा, दम इन्द्रियनिग्रहः, ध्यानं च शुक्लध्यानमिति ध्येयम् । यदुक्तम् "सर्वाभिः कृपाऽऽप्लुते"ति, "सकलानि च चाऽक्षाणि नैवोच्छृङ्खलितानि च । इति सम्यक्त्वमतिरस्य सर्वेन्द्रियवश-स्त" इति ' ध्याता ध्येयं तथा ध्यानं त्रयमेकात्मतां गतमि"ति च । सः=तादृशो महाज्ञानदयादमध्यानवान् देव एव । सर्वं वाक्यं साव-धारणमिति न्यायादेवकारो लभ्यते । तेन चाऽस्य ज्ञानदयादमध्यान-व्यवच्छेदः । महादेवः=महादेवपदप्रतिपाद्यः, उच्यते=कथ्यते । महादेवपदेन स एव गीयते इत्यर्थः । न तु तीर्थान्तरप्रसिद्धो महा-देवोऽस्मात् मुक्तिमार्गोपदेशानिर्दयोऽसुरादिहननात्मदमरहितो दार-परिग्रहादेर्दुर्ध्यानो द्वेषिमनुष्येषु कोपादिमत्त्वादिति भावः ॥ ३ ॥

अथेन्द्रियजयद्वारा देवस्य पुनर्महत्त्वमाह—

महान्तस्तस्करा ये तु तिष्ठन्ति स्वशरीरके ।
निर्जिता येन देवेन महादेवः स उच्यते ॥ ४ ॥

महान्त इति । **स्वशरीरके**=स्व निज यच्छरीरम्, स्वार्थे क । तस्मिन्, निजदेहे, **तिष्ठन्तः**=वर्तमाना, **ये**=यत्प्रकारा, तुरेवाऽर्थे भिन्नक्रम स इत्यनेन सम्बध्यते । **महान्तः**=धनधान्याद्यपहारक-तस्कराऽपेक्षया बलवन्तो दुर्निग्राह्या आत्मसम्पदा सम्यग्दर्शनादीनां पश्यतोहरा, **तस्कराः**=चौरा, इन्द्रियाणि मनोवच काययोगरूप आस्रवो वा । तानि हि बलाद्विषयेषु प्रवर्त्तयन्ति सद्दर्शनादीनि मुष्णन्तीति बोध्यम् । "चौरस्तु प्रतिरोधकः । दस्यु पाटच्चर स्तेनस्तस्करः पारिपन्थिक" इति हैम । अन्ये हि तस्करा परोक्ष एव बाह्य धनमेव च मुष्णन्ति, इन्द्रियाण्यास्रवाश्च शरीरे कृतस्थितय एव बला-दात्मसर्वस्वं दर्शनादिकमपहरन्तीति तानि महान्तस्तस्करा इति हृदयम् । ते इति यच्छब्दबलाल्लभ्यते । **येन**=यत्प्रकारेणाऽनन्तज्ञानादिमता संवरसंवृतेन, **देवेन**=देवपदवाच्येन, **निर्जिताः**=वशीकृता निगृहीता वा । यो देवो जितेन्द्रिय संवरसंवृतश्चेति निष्कृष्टोऽर्थ, न तु दार-परिग्रहादिनिरत. शत्रुवधादिकदारम्भवाश्चेति हृदयम् । यदुक्तम्—"सयतानि न चाऽक्षाणि नैवोच्छृङ्खलितानि च । इति सम्यक्प्रतिपदा त्वयेन्द्रियजय कृत" इति, "मनोवच कायचेष्टा कष्टा संहृत्य सर्वथा । श्लथत्वेनैव भवता मन शल्य वियोजितमि"ति च । **स तु**=स एव, **महादेव उच्यते** । बाह्यतस्करजयवदान्तरतस्करजयो येन विहित स महादेव । बाह्यतस्करजये तु देवमात्रम् । अन्येषामपि तादृशत्वान्महत्त्वे बीजाऽभावात् । ततश्चाऽन्यादृशोऽजितेन्द्रियो हिंसा-द्यारम्भवाश्च देव परतीर्थिकप्रसिद्धो महादेव सामान्यदेवसदृश एवेति न केवलं महत्त्वमपि तु देवत्वमपि तस्याऽतिवह्वित्याकूतम् ॥ ४ ॥

धारयन्ति, न तु तत्र महादेवपदार्थोऽपि घटते। एवञ्च ते रूढ्यैव महादेवा न तु योगत इति वस्तुतस्ते न महादेवा। नामनिक्षेपविषयताया यादृच्छिकत्वात्तादृशमहादेवाद्विष्टाऽसिद्धे। अर्थक्रियाकारित्वाद्भावतो महादेव एव महादेव। किञ्चाऽन्यैर्दुर्जेय यो जयति स एवेतराऽपेक्षयोत्कृष्टगुणवैशिष्ट्यान्महत्त्वास्पदम्। यदुक्तम्—"अरक्तो भुक्तवान्मुक्तिमद्विष्टो हतवान् द्विष। अहो महात्मना कोऽपि महिमा लोकदुर्लभ" इति। रागादिपरतन्त्राणा देवाना रागादिजेता महानिति वीतराग एव भावतो महादेवो नाऽन्ये। यद्वक्ष्यत्यनुपदमेव—"शब्दतो गुणतश्चैवाऽर्थतोऽपि जिनशासन" इति भाव ॥ ५ ॥

ननु नामभावमहादेवयो कतरस्तवेष्ट इति चेत्तत्राऽऽह—

**शब्दमात्रो महादेवो लौकिकानां मते मतः।**
**शब्दतो गुणतश्चैवाऽर्थतोऽपि जिनशासने ॥ ६ ॥**

शब्दमात्र इति। **लौकिकानाम्**=लोका एव लौकिकास्तेषाम्, साधारणजनाना वस्तुतत्त्वग्रहणाऽपटूनामित्यर्थ.। लौकिकमर्थं बहु मन्यमानानामिति यावत्। **मते**=सिद्धान्ते, शासने इत्यर्थ.। स्वर्गादिमात्रसाधनहिंसादिसाध्ययज्ञादिप्रतिपादके शास्त्रे इति हृदयम्। **मत:**=इष्ट प्रतिपादितश्च, **महादेव:**=महादेवाऽभिधो देव, **शब्दमात्र:**=शब्द एव, शब्दत एवेत्यर्थ। न तु तत्र महादेवपदार्थो महादेवगुणो वा, रागादिसत्त्वान्महत्त्वाऽभावात्। यदुक्तम्—"स्पृहावन्तो विलोक्यन्ते लघवस्तृणतूलवत्। महाश्चर्यं तथाप्येते मज्जन्ति भववारिधावि"ति "तूल तृणादपि लघु तूलादपि हि याचक। वायुना किं न नीतो-

ऽसौ नामसं नार्यमित्यत्री "ति च । एवञ्च मन्महत्त्वाऽभावेऽपि महादेव उच्यतेऽसो नामनिक्षेपविषय एवेति शब्दमात्र एव, न तु भावनिक्षेपविषयत्वाद्वास्त इति तात्पर्यम् । ननु तर्हि महादेव. क पारमार्थिको मत इति चेत्वाह — जिनशासने=भवति रागादीनिति जिनस्तस्य तदुपदेशलाभस्मनन्निति शासने शासे जैनमतमत इत्यर्थः । युक्ततः= महादेवपदबोध्यत्वाच्छब्देन कृत्वा, सार्वविभक्तिकस्तस् । गुणतः= ज्ञानेन्द्रियप्रमपीतरागत्वादिर्गुणैः कृत्वा, चैवेति समुच्चये । मत एव अर्थतः=महांश्चासौ देवश्चेत्यर्थसद्भावेन कृत्वा अपि:=समुच्चये । एवञ्च जिनशासनमतो महादेव एव भावनिक्षेपविषयत्वाद्वास्तवो महादेव इति लौकिकमताऽपेक्षया परमार्थतो वस्तुमाहिरत्वैशिष्ट्याल्लोकोत्तरं जिनशासनमिति मन्यते । एवञ्चाऽन्यतीर्थसम्मतो महादेवो महादेव गुणस्य महादेवपदार्थस्य चाऽसत्वात्र स इष्टः किन्तु जिनशासनसम्मत एवति स एवाऽऽश्रयणीय इति भावः ॥ ६ ॥

प्रागुक्तं गुणतोऽर्थतश्चेति तदेव कतिभिः श्लोकै र्विशदयति —

शक्तितो व्यक्तितश्चैव विज्ञानाल्लक्षणात्तथा ।
मोहजालं हतं येन महादेव स उच्यते ॥ ७ ॥

शक्ति इति । येन=यद्देवेन देवेन, मोहजालम्=मोहो ऽस्ते स्मृतिः प्रगुक्तम् — 'अनित्यमनदेहादौ नित्यत्वेन ममेति च । अज्ञानेनाऽऽकृता बुद्धिर्मोह इत्यभिधीयते इति । स एव संसारे जालमिवन्तनसाधनमिति भावम् मोहस्य जालं परम्परा वा हतम्= विनाशितम् येन मोहस्यक इति सारार्थ । सः=महान्सो देव ,

**शक्तितः**=निजात्मवीर्यविशेषतः, वीतरागस्य क्षायिकाऽनन्तवीर्यवत्त्वादिति भावः। **व्यक्तितः**=सहजाद्यतिशयविशिष्टतया स्वीयेतरविलक्षणाऽसाधारणाऽलौकिकव्यक्तित्वमपेक्ष्य, चैवेति समुच्चये। **विज्ञानात्**=विशिष्टं सर्वद्रव्यपर्यायविषयत्वादनन्तत्वाद्विशुद्धत्वाच्चेतराऽपेक्षयोत्कृष्टं यज्ज्ञानं तस्मात्, केवलज्ञानाद्धेतोरित्यर्थः। **तथा**=पुनः, **लक्षणात्**=सुरासुरनमस्यत्वादिरागद्वेषजयादिरूपमहादेवलक्षणस्योक्तस्य वक्ष्यमाणस्य च सद्भावाद्धेतोश्च, **सः**=तादृशो मोहजालहन्ता देवः, **महादेव उच्यते**। यो वीतमोहोऽनन्तवीर्यः सातिशयव्यक्तिर्विज्ञानवान्, अत एव महादेवलक्षणोपेतश्च स महादेव उच्यते, इतरस्तु शब्दमात्र इति सारार्थः। यद्वा येन विज्ञानात्स्वीयविशिष्टज्ञानबलाच्छक्तितो निजात्मवीर्यविशेषबलाच्च मोहजालं व्यक्तितो व्यक्त्या, प्रत्येकं व्यक्ति यथास्यात्तथा, अयं मोहोऽयं मोह इत्येवं प्रतिव्यक्ति शृङ्गग्राहिकया गृहीत्वेत्यर्थः। मोहसमूहसम्बन्धिन्यः सर्वा एव व्यक्तय इति यावत्। हतम्, स लक्षणात्सकलमोहहन्तृत्वरूपाऽसाधारणधर्मात्मकलक्षणहेतोर्महादेव उच्यत इत्यर्थः। न तु तीर्थान्तरीयदेववद्भार्यावियोगादिना क्षणं विरक्तः, स्वभार्यायां पार्वत्यां दक्षयज्ञे मृतायां महादेवो विरक्तस्तपस्तेपे, पुनश्च दारपरिग्रहः कृत इति पौराणिका इत्यनुसन्धेयम्॥ ७॥

इदानीं मदलोभजयाख्यगुणेन स्तुवन्नाह—

**नमोऽस्तु ते महादेव! महामदविवर्जित!**
**महालोभविनिर्मुक्त! महागुणसमन्वित!॥ ८॥**

मम इति । महामदविवर्जित !=मदै र्ज्ञानाद्युत्कर्षाऽभिमानजनितौद्धत्यैर्विवर्जितो रहित महान् ज्ञानाद्युत्कर्षादिरूपमदस्तस्य साकल्येऽपि साकल्येन सद्रहितत्वात्सर्वाधिकश्चाऽसौ मदविवर्जितश्च स तादृश, यद्वा महान् अन्यापेक्षयाऽप्यधिको यो मदस्तेन विवर्जित, तत्सम्बोधने, यो महता मदेन विवर्जित सोऽल्पेनाऽपि तेन विवर्जितो भवत्येवेति सर्वविधमदविवर्जितत्वात्सर्वाधिको मदविवर्जित स एवेति निर्मदश्चेत्य इत्यर्थः । देवान्तर तु श्मशानादिनिवासान्नृत्यादिभिर्वेशाद्यपमिमानेन हिंसादिमत्त्वाच्च मदवां माऽस्तिकामतीति न स महादेव इति हृदयम् । " चित्तोद्रेक स्मये मद " इत्यमरः । तथा, महालोभविनिर्मुक्त !=लोभ. परस्वग्रहणेच्छा, तेन विनिर्मुक्तो रहित:, निर्लोभ इत्यर्थ । निष्परिग्रहत्वादिति भावः । महान् साकल्येन लोभ रहितत्वात्सर्वश्रेष्ठो लोभविनिर्मुक्तः, यद्वा महद्भिर्देवेभ्यादेयाद्याऽल्पत्यादिविवेकपरिहारेण महारम्भादिमयोऽमकत्वादयत्नुत्कटैर्लोभैर्विनिर्मुक्त, तत्सम्बोधने । महता लोभेन रहितोऽल्पेनाऽपि तेन रहितो भवत्येवेति सर्वविधलोभरहित इत्यर्थ । न तु देवान्तरवद्द्रव्यपूजादिना प्रसद्यमानत्वादिनाऽनुमेयलोभगन्ध इति हृदयम् । अत एव, महागुणसमन्वित !=महद्भिरन्यैरसाध्यै निर्मदत्वनिर्लोभत्वादिभिस्तथा सर्वभूतोपकारित्वादिभि. सर्वोत्कृष्टविशुद्धज्ञानादिभिश्च गुणै र्वैशिष्ट्यै: समन्वित सहितः, यद्वा महान् निर्मदत्वादिभिस्सर्वोपकारैर्गुणैः कृत्वा सर्वोत्तमश्चाऽसौ गुणसमन्वितश्च स तत्सम्बोधने । गुणिश्रेष्ठेत्यर्थः । अत एव च महादेव ! =महान् देवान्तराऽपेक्षयाऽधिकगुणत्वात्सर्वश्रेष्ठश्चाऽसौ देवश्च, तत्सम्बोधन । यो हि मदादिरहितो गुणवांश्च स महादेव, अन्यथा तु सर्वो

महादेव एव स्यादिति हृदयम्। ते=तुभ्यमेव तादृशाऽनुत्तमविशेषण-विशिष्टाय, न त्वनीदृशाय, सर्वं वाक्य सावधारणमिति न्यायादिति वोध्यम्। नमः=नमस्कारोऽस्तु, ममेतिशेष । मदादिराहित्याय गुणलाभाय च तादृशो महादेव एव नमस्करणीय उत्कृष्टत्वान्नाऽन्यादृशो-ऽपकृष्टत्वादात्महितेच्छुभिरिति तीर्थान्तरप्रसिद्धो महादेवो न केवलं शब्दमात्रोऽपि तु नमस्कारमपि नार्हतीत्याकूतम् ॥ ८ ॥

सम्प्रति पुन रागाद्यभावान्महादेवत्वमाह—

**महारागो महाद्वेषो महामोहस्तथैव च ।**
**कषायश्च हतो येन महादेवः स उच्यते ॥ ९ ॥**

महाराग इति । येन=यत्प्रकारेण देवेन भुवनाऽद्भुताऽतिशय-शालिना, **महारागः**=महान् गुरुतरो दुष्परिहरत्वाद्दृढतरश्चिरसह-चरत्वाद्वशीकृतजीवमात्रत्वाच्च दुर्जयश्च यो रागो विषयाऽनुरागो विषया-ऽऽसक्तिर्विषयेषु प्रीतिर्वा स तादृश, "रागोऽनुरागोऽनुरति"रिति हैमः । **महाद्वेषः**=महान् गुरुतरो दृढतरो दुर्जयश्च यो द्वेषोऽनिष्टेष्व-प्रीति. स तादृश, **तथैव चेति** समुदाय समुच्चये । **महामोहः**= महान् गुरुतरो दृढतरो दुर्जयश्च यो मोहोऽस्वे स्वबुद्धि', स तादृश', **कषायः**=क्रोधमानमायालोभात्मकाऽऽत्माऽशुभपरिणाम, **चः** समुच्चये । **हतः**=विनाशित, त्यक्त इत्यर्थ । रागादीना हि त्याग एव नाश इति वोध्यम्। न तु देवान्तरवन्निग्रहानुग्रहपरिग्रहादिनाऽनुमितरागादि-मानित्याकूतम्। परे देवा रागादीनपि हन्तुमप्रभवोऽय तु महारागा-दीनपि हन्तीत्यत एव, **सः**=तादृगमहारागादिहननसाधनाऽसाधारणा-ऽलौकिकाऽऽत्मवीर्यसम्पन्न, **महादेव** उच्यते । देवाऽन्तराऽसाध्य-

महारागादिहननादस्यैवोचितं महत्त्वम् । अनीशस्तु यथा देवान्तर-साधारण इति सम्यगाह स इति हृदयम् ॥ ९ ॥

सम्प्रति महाव्रतोपदेशादिना महादेवत्वमाह—

महाकामो हतो येन महाभयविवर्जितः ।
महाव्रतोपदेशी च महादेवः स उच्यते ॥ १० ॥

महाकाम इति । येन=यत्प्रकारेण देवेन, महाकामः=महान् असीममपि वस्तुनुत्कटतया गुरुतर उत्कर्षकारेण दुर्दमनः कामो भोगोपभोगेच्छा स तादृशः सर्वप्रकारश्च कामः, हतः=क्षमामयणेन विनाशितः, यो महान्तं कामं हन्ति सोऽस्य हन्तीति किमु वक्तव्यमिति सर्वविधकामहन्तेति भावः । न तु परतीर्थिकप्रसिद्ध महादेववत्कामं दग्ध्वाऽपि पुनस्तदुपभोगोऽप्यकामहन्तेति भावः । ननु निष्कामोऽपि देवान्तरवन्निर्भयो न भवेदिति चेत्तत्राह—महाभयविवर्जितः=महान् गुरुतरकारणप्रसूतत्वाद्दुर्निवारत्वात्मकं भयं मत भयमित्यर्थः । तदेव महद्भयं मृत्युरूपत्वात्, अन्यादृशं चौराद्यखिल-वादिभयं तु कथमपि संप्रयुक्तेनापि स्वल्पमेव, तेन विवर्जितो रहितः, क्षीणाऽशेषकर्मत्वात् सर्वथा निर्भय इति हृदयम् । महाभयरहितत्व हि न्यूनत्वं भयमपीति बोध्यम् । अत एव देवान्तराद्वैशिष्ट्यम् तस्य हि भवभयाऽनुच्छेदात् कथमन्यथा स्वाभिप्रायरक्षार्थमसुरादिनिग्रहमस्य पुराणादौ वर्णित इति भावः । लोकोपकाराऽपेक्षयाऽपि तस्य महत्त्व-मपेक्षितमित्याह—महाव्रतोपदेशी=महान्तौ व्रतानुपपारिकप्रसा-स्सर्वभद्र मनुष्यमहिंसासत्याऽस्तेयब्रह्माऽपरिग्रहात्मकं चारित्रं तदुप

दिशतीत्येवशील, तादृशव्रतस्योपदेशोऽस्त्यस्य विधेयतया प्रतिपाद्यतया च वा सः, च समुच्चये। न तु बालतपोहिंसादिसाध्ययज्ञादिरूप-निकृष्टव्रतोपदेशीति भाव। **स महादेव उच्यते।** यस्त्वल्पकामहन्ता दारपरिग्रहादिना कामाधीनो वा भवमग्नतया भवभीतोऽल्पव्रतोपदेशी च शासनान्तरे प्रसिद्धस्तस्य तु देवत्वमप्यतिबहु, तस्मात्स महादेवः शब्दमात्र एवेति तात्पर्यम् ॥ १० ॥

अथ क्रोधादिजेतृत्वेन महादेवत्वमाह—

**महाक्रोधो महामानो महामाया महामदः ।**
**महालोभो हतो येन महादेवः स उच्यते ॥ ११ ॥**

महाक्रोध इति। **येन**=यत्प्रकारेण देवेन, **महाक्रोधः**=महानत्युत्कटो हिंसादिप्रवृत्तिप्रयोजकतयाऽतिचिरस्थायितयाऽनल्पश्च य क्रोधो विविधाऽनिष्टप्रयोजकतया स्वसजातीयेषु गुरुतरः कोप, तथा, **महामानः**=महान् गुर्वादिष्वप्यवज्ञाप्रयोजकत्वादतिमात्रो यो मानो मम जात्यादिक सर्वाऽधिक नाऽन्य कोऽपि मादृश इत्येव जातिकुलैश्वर्य-विद्याद्यभिमान, स। "गर्वोऽभिमानोऽहङ्कारो मानश्चित्तसमुन्नतिरि"-त्यमर। तथा, **महामाया**=महती परैर्दुर्ज्ञेयत्वाद्दुष्पारा या माया शाठ्य मिथ्याव्यापारेण परवञ्चनादिरूप सा। "माया तु शठता शाठ्यमि"ति हैम। **महामदः**=महान् अविनयादिप्रयोजकत्वाद्दुस्तरो यो मदो बलैश्वर्याद्यधिक्यभावनाजनितचित्तोद्रेक, स। अत्यधिक-मौद्धत्यमित्यर्थ। "चित्तोद्रेक स्मयो मद" इत्यमरः। तथा **महालोभः**=महान् स्वल्पेऽपि वस्तुनि महाजनादियाच्ञादिप्रयोजकत्वादतिलघुत्व-

त्कमपि महत्त्व गम्यते । -महानन्दादिसमर्थनक्षमं गुणान्तरमप्याह—
**महाज्ञानी**=महदनन्तत्वात्सर्वविषयत्वात्सर्वाधिक क्षायिकत्वात्सर्वविशुद्ध च यज्ज्ञान केवलज्ञान तदस्त्यस्येति स तादृश, सर्वज्ञ इत्यर्थ । यो महाज्ञानी तस्यैव महानन्ददये इति भाव । अनरवन्ति चक्राणीतिवत्कर्मधारयान्मत्वर्थीयो बोध्य । हेतुद्वारकेण विशेषणेन ज्ञान समर्थयन्नाह—**महातपाः**=मह-परैरसाध्यत्वान्निरन्तरत्वान्निर्दुष्टत्वान्महाफलत्वाच्च सर्वोत्कृष्ट सर्वविशुद्धं सर्वाधिक च तपोऽनशनादिरूप यस्य स तादृश, ज्ञानतपसो फलमाह—**महायोगी**=महान् सर्वाऽतिशयमूलतयाऽलौकिकतयाऽसाधारणतया सर्वकर्मक्षयप्रयोजकतया चाऽनुपम. सर्वोत्कृष्टो निरन्तर प्रवृत्तोऽसाधारणो योगश्चारित्र समाधिर्वा यस्य स, योगीन्द्र इत्यर्थ· । यदुक्तम्—"स एष योगसाम्राज्यमहिमा विश्वविश्रुत । कर्मक्षयोत्थो भगवन्! कस्य नाऽऽश्चर्यकारणम्?" इति । ज्ञानतपसोर्महायोगलाभ. फलमिति कृतार्थत्वं ध्वन्यते । **महामौनी**=महत् सर्वविलक्षणत्वात्सर्वोत्तमत्वादभङ्गुरत्वाच्चाऽसाधारणत्वाच्च सर्वश्रेष्ठं यन्मौन वाचयमता, तदस्त्यस्येति स । प्रियपथ्यतथ्यमितवाक्यं हि पारमार्थिक मौनम्, वाङ्निरोधश्च शब्दार्थमात्रम्, वाङ्निरोधात्मकमौनस्य हि सदुपदेशादिविरोधितया लोकहिताननुगुणत्वादिति ध्येयम् । किञ्च महत्सर्वाऽतिशायि यन्मौन मुनित्व मुनेर्भावः कर्म च, तदस्त्यस्येति स., महाज्ञानचारित्रसम्पन्न सम्यक्त्वसम्पन्नश्चेत्यर्थ.। यदुक्तम्—"सम्यक्त्वमेव तन्मौन मौन सम्यक्त्वमेव वे"ति बोध्यम् । **स महादेव उच्यते ।** लौकिकाऽनन्दमग्नो निर्दयोऽल्पज्ञोऽल्पतपा बाल्योगी मायामौनव्रती

लोकहिंसाऽननुगुणमौनी च परस्मात्तो देव इति स सर्वमान्य इति मे निश्चितम् ॥ १२ ॥

सम्प्रति वीर्यादिमहत्त्वान्महादेवत्वमाह—

महावीर्यं महाधैर्यं महाशीलं महागुणः ।
महामञ्जुक्षमा यस्य महादेवः स उच्यते ॥ १३ ॥

महावीर्यमिति । यस्य = यादृशस्य देवस्य, महावीर्यम्= महदसाधारणत्वादलौकिकत्वात्स्वाभाविकत्वादनन्तत्वाच्चाऽन्यस्य सर्वाधिकं सर्वोत्तमं च महद्वीर्यं सामर्थ्यम् उत्साहः, तत् । महाधैर्यम्=महदप्युपसर्गादावप्यविचलितत्वादनन्यसाधारणत्वादलौकिकं सर्वाधिकं यद् धैर्यमक्षोभ्यस्वभावताऽनुद्वेगश्च तत् । महाशीलम्=महदसाधारणत्वादलौकिकत्वादनन्यसाध्यत्वात्समत्वाच्च सर्वोत्तमं यच्छीलं चारित्रं तत् । महागुणः = महान् महद्भिरपीन्द्रादिभिः स्पृहणीयत्वादसाधारणत्वाद् अलौकिकत्वात्सर्वोपकारकत्वाच्च सर्वोत्कृष्टो यो गुणो विशेषणं सर्वज्ञत्वसर्व-मादिर्यस्यास्ति स । महामञ्जुक्षमा=महती शक्तौ सत्यामप्यपकारिष्वपि भावादसाधारण्यलौकिकी च अत एव मञ्जु मनोरमा च या क्षमा तितिक्षा सा । 'तितिक्षा क्षान्तिः क्षमे'ति "मञ्जुमञ्जुलमनोरमाणि चे"ति च हैमः । सामर्थ्यात्समुच्चयो गम्यते । एवमेतानि यस्य, स महादेव उच्यते । न त्वन्यदेवस्य परस्वकार्यत्वादल्पवीर्योऽस्ते-माऽपि क्षोभ्यत्वादधैर्यो दारादिपरिग्रहादिना स्पष्टितशील गुणाऽ-गुणवत्याऽऽहावादिमत्त्वादल्पगुणोऽल्पक्षमोऽप्यपराधे निग्रहोपक्रमत्वात्सहनः,

प्रसिद्धं चैतत्सर्वं तीर्थान्तरप्रसिद्धस्य महादेवस्य पुराणादौ। तस्माच्छब्द-मात्रो महादेव परशासन इति भाव ॥ १३ ॥

अथ स्वयम्भूशब्दार्थनिर्वचनेन कृत्वा जिनशासनप्रतिपादितस्य महादेवस्यैव स्वयम्भूपदवाच्यतेत्याह—

**स्वयम्भूत यतो ज्ञान लोकाऽलोकप्रकाशकम् ।**
**अनन्तवीर्यचारित्र स्वयम्भूः सोऽभिधीयते ॥ १४ ॥**

स्वयम्भूतमिति। **यतः**=यस्य देवस्य, सार्वविभक्तिकस्तस्। यस्माद्धेतोरिति वा। **लोकालोकप्रकाशकम्**=लोकस्य चतुर्दशरज्जु-प्रमाणस्य जगतोऽलोकस्य लोकबहिर्भूतस्य च यावत आकाशप्रदेशस्य प्रकाशक परिच्छेदकम्। यद्यपि लोकाद्बहिर्भूत न किमपि ज्ञेय तथापि यदि स्यात्परिच्छिद्येतेति सम्भावनया महत्त्वद्योतनाय तथोक्तिरिति बोध्यम। **ज्ञानम्**=केवलज्ञानम, तज्ज्ञान हि क्षायिकमिति निरावरण-त्वाल्लोकालोकप्रकाशकमिति बोध्यम्। **स्वयम्भूतम्**=स्वयमात्मना परोपदेशादिक विनैव भूत प्राप्तमाविर्भूत वा। कर्मक्षये हि मेघापगमे सूर्यवज्ज्ञान स्वयमेवाऽऽविर्भवति। किञ्च जिनाना क्षयोपशमवशाज्जन्मत एव ज्ञानत्रयसमन्वितत्व निसर्गत एवेति बोध्यम्। तथा, **अनन्तवीर्य-चारित्रम्**=अनन्त क्षायिकत्वादेवाऽविनश्वर वीर्यं सातिशय उत्साहश्चारित्र शील च, **सः**=यतो यस्यैतानि, तत एव तादृशो देव, **स्वयम्भूः**= स्वयम्भूरित्येवम्, **अभिधीयते**=गीयते। ज्ञानस्य स्वयम्भूतत्वादेव स्वयम्भू, न तु परदेववदज्ञातजन्मत्वादिनाऽल्पज्ञानवीर्यचारित्र· स्वयम्भूः। एवञ्च लौकिकानां मते स्वयम्भूरपि शब्दमात्र·, जिनशासने तु गुणतः शब्दतोऽर्थतश्चेति तात्पर्यम् ॥ १४ ॥

परतीर्थेष्टो देवो न शिवो नाऽपि शङ्कर., किन्तु शब्दमात्रेण स शिवः शङ्करश्च । गुणतोऽर्थतश्शब्दतश्च जिन एव तादृश इति तात्पर्यम् ॥१५॥

परतीर्थप्रसिद्धस्य महादेवस्य साकारनिराकारत्वादि यद्वर्ण्यते, जिनशासनेष्टस्याऽपि तत्तथैवेति न तावताऽपि तस्य वैशिष्ट्यमित्याह—

**साकारोऽपि ह्यनाकारो मूर्त्तोऽमूर्त्तस्तथैव च ।**
**परमात्मा च बाह्यात्मा सोऽन्तरात्मा तथैव च ॥ १६ ॥**

साकारोऽपीति । **सः**=जिनशासनेष्टो महादेव., **हि**=यत-, **साकारः**=ससाराऽवस्थाया शरीरित्वादाकारेण यथाक्रमसन्निविष्टाऽङ्गादिघटिताऽऽकृतिविशेषेण सहित, शरीरीति यावत् । ससारीति हृदयम् । न तु देवान्तरवदवतारग्रहेण तथा, मुक्तस्य जन्मग्रहणाऽयोगात् । जन्मादितो मुक्तिरेव हि मुक्तिरिति बोध्यम् । अत एव, **मूर्त्तः**= निश्चयनयेनाऽऽत्मन· स्वभावतोऽमूर्त्तत्वेऽपि संसाराऽवस्थायां कर्माऽष्टकोपगूढाऽऽत्मप्रदेशत्वाच्छरीराऽधिष्ठितत्वाच्च व्यवहारनयेन कथञ्चिद्रूपी, **अपिना** साकारस्याऽनाकारता विरुध्यत इति सूच्यते । अपेक्षाभेदेन त्वविरोध इति बोध्यम् । **तथैवे**ति समुच्चये । **अनाकारः**= सिद्धावस्थाया कर्मणां साकल्येनाऽभावाच्छरीराद्यभावादविद्यमान आकार उक्तप्रकाराऽऽकृतिर्यस्य स तादृश., अशरीरीत्यर्थ· । मुक्त इति यावत् । **चो**=हेतौ, यतोऽनाकारोऽत एव, **अमूर्त्त**=अरूपी, कर्मसम्बन्धाऽभावात्कथञ्चिन्मूर्त्तत्वस्याऽप्यभावादिति भाव । एतेन परेष्टदेवस्य यथा साकारनिराकारत्वादि तथा जिनशासनेष्टदेवस्याऽपीति न तावता कस्यचिदेकस्याऽपि न्यूनत्वमुत्कर्षो वा वर्णयितुं शक्यत इति सूच्यते । जिनशासने

महादेवस्य परमात्मत्वादिकमप्याह—परमात्मा, बाह्यात्मा, तथैव अन्तरात्मा च। स महादेव इति प्रकरणाल्लभ्यते। परमात्मत्वमिह मनुष्यभवे स्वयमेवोपपादयिष्यते इति ध्येयम्। एवञ्च साकारनिराकारत्वादिना न केवलं परतीर्थिकस्य महादेवस्य किमपि वैशिष्ट्यम्, जिनशासनेशस्य च तस्य काऽपि न्यूनता च। अस्तु नामात्र तर्हि गुणानां सत्त्वसाम्यमेव। किन्तु मत्कान्तं दर्शनं मत्स्येत्यादिना वर्णितं वैशिष्ट्यं तु जिनशासनेशस्य महादेवस्यैवेति परतीर्थिकमहादेवस्य न्यूनता तदवस्थैवाऽव्यापीति बोध्यम् ॥ १६ ॥

*यदुक्तं 'परमात्मा च बाह्यात्मे'त्यादि, क्रमशस्तत्स्वरूपमभिधित्सुरादौ* परमात्मत्वमेवाह—

> दर्शनज्ञानयोगेन परमात्माऽयमव्ययः ।
> परा क्षान्तिरहिंसा च परमात्मा स उच्यते ॥ १७ ॥

दर्शनेत्यादि। अयम्=प्रस्तुतो जिनशासनेशो महादेवः, अव्ययः=अविनाशी, आत्मनो द्रव्यत्वेन नित्यत्वादिति भावः। दर्शनज्ञानयोगेन=दर्शनं क्षायिकं केवलदर्शनं सामान्यज्ञानात्मकं उपलक्षितं त्रिलोकतत्त्वेषु श्रद्धानात्मकं सम्यक्त्वं च, ज्ञानं क्षायिकं केवलज्ञानं स्याद्वादाऽभिमताऽनेकान्तात्मकयथावस्थितवस्तुतत्त्वज्ञानं च, तयोः स्वस्मिन् योगः सम्बन्धः आत्मनो दर्शनज्ञानस्वरूपपरिणाम इति तत्त्वम्, तेन हेतुना। जिनस्य हि जन्मत एव दर्शनज्ञानत्रययुक्ततया दीक्षानन्तरं घातिकर्मक्षये केवलदर्शनज्ञानयुक्ततया योग्यात्मा, यद्वा दर्शनज्ञानयोगेन, अव्ययः=जन्ममरणाद्यपायरहितत्वादविनाशी

निर्विकारो निर्गुण इत्यर्थः । **परमात्मा**=परमो ज्ञानादिगुणोत्कर्षात्सर्वोत्कृष्ट पञ्चप्रकृतिरुत्तमोत्तम आत्मा । एतेन नहि निर्हेतुक परमत्वमात्मनोऽपि तु परमज्ञानादिगुणोत्कर्षात । अत एवोक्तगुणसद्भावाज्जिन एव वस्तुतः परमात्मा । तीर्थान्तरप्रसिद्धस्य च महादेवस्य परिग्रहेण रागादिमत्त्वनिश्चयान्मत्यज्ञानादिकमेव, पुराणादितस्तस्यैकान्तात्मकवस्तुस्वैरेवाऽवगमादिति तस्य परात्मत्व शब्दमात्रमिति समर्थितम् । यद्वाअय जिनशासनेष्टो महादेवो ज्ञानदर्शनयोगेन कृत्वा, **अव्ययः**=न व्येति परात्मत्वतोऽपगच्छति=दर्शनज्ञानादिना रहितो भवति, जन्मत एव ज्ञानत्रयादियुक्तत्वादित्यव्ययः परमात्मा । सर्वविशुद्धज्ञानादितो ह्यात्मन. परमत्व न तु वाङ्मात्रतः, ज्ञानादि चाऽस्य जन्मत एवेत्ययमव्ययः परमात्मा परमात्मत्वतो न कदापि हीयते । परेष्टदेवस्तु लौकिकेषु विशिष्टज्ञानादिना वाढं परमात्मा गीयताम्, न त्वव्यय. परमात्मा । अवताराद्यवस्थाया लौकिकविशिष्टज्ञानस्याऽप्यभावादिति जिनशासनेष्टो देव एवाऽव्यय परमात्मेत्याशयः । ननु "य सर्वज्ञः सर्वविदि" त्यादिना परेष्टदेवस्याऽपि सर्वज्ञत्वादिकमिति तस्यापि परमात्मत्व पारमार्थिकमेवेति चेत्तत्राह—**परेति** । यस्येत्यर्थबलाल्लभ्यते । यस्याऽत्मनो महादेवस्य, **परा**=सर्वाधिका सर्वोत्कृष्टा च, मित्रद्वेषिसाधारणत्वात्परां काष्ठामापन्नेत्यर्थ. । **क्षान्तिः**=क्षमा, निग्रहसामर्थ्ये सत्यपि वीतरागत्वादपराधादिसहनमित्यर्थ । यदुक्तम्—"हिंसका अप्युपकृता" इति, "कृताऽपराधेऽपि जने कृपामन्थरतारयोः । ईषद्बाष्पार्द्रयोर्भद्र श्रीवीरजिननेत्रयोरि"ति चेति भाव । **अहिंसा**=प्राणातिपातनिवृत्तिः, चेन परेति सम्बध्यते । सर्वजीवविषयत्वात्सर्वसावद्यविरतत्वाच्च परा

महादेवस्य परमात्मत्वादिकमप्याह—परमात्मा, बाह्यात्मा, तथैव अन्तरात्मा च । स महादेव इति प्रकरणाल्लभ्यते । परमात्मत्वमिह मनुष्यत्वमेव स्वयमेवोपपादयिष्यते इति ध्येयम् । एवञ्च साकारनिराकारवादिना न केवलं परतीर्थिकस्य महादेवस्य किमपि वैशिष्ट्यम्, जिनशासनेष्टस्य च तस्य काऽपि न्यूनता च । प्रस्तुतोभयत्र तेषां गुणानां सत्त्वस्यासाम्यमेव । किन्तु यथान्वेषणं यस्येत्यादिना वर्णितं वैशिष्ट्यं तु जिनशासनेष्टस्य महादेवस्यैवेति परतीर्थिकमहादेवस्य न्यूनता तत्रत्यैवाऽव्यापीति बोध्यम् ॥ १६ ॥

यदुक्तं 'परमात्मा च बाह्यात्मे'त्यादि, क्रमशस्तदुपपादयिष्यन्नादौ परमात्मत्वमेवाह—

दर्शनज्ञानयोगेन परमात्माऽयमव्ययः ।
परा क्षान्तिरहिंसा च परमात्मा स उच्यते ॥ १७ ॥

दर्शनेत्यादि । अयम्=प्रस्तुतो जिनशासनेष्टो महादेवः अव्ययः=अविनाशी, आत्मनो द्रव्यत्वेन नित्यत्वादिति भावः । दर्शनज्ञानयोगेन=दर्शनं क्षायिकं केवलदर्शनं सामान्यज्ञानात्मकं तथाविधं त्रिलोकतत्त्वेषु श्रद्धानात्मकं सम्यक्त्वं च, ज्ञानं क्षायिकं केवलज्ञानं स्याद्वादाऽभिमताऽनेकान्तात्मकत्वावसितवस्तुतत्त्वज्ञानं च, तयो स्तस्मिन् योगः सम्बन्धः आत्मनो दर्शनज्ञानात्मना परिणाम इति यावत्, तेन हेतुना । जिनस्य हि जन्मत एव दर्शनज्ञानत्रययुक्ततया दीक्षानन्तरं घातिकर्मक्षये केवलदर्शनज्ञानयुक्ततया चेत्थमव्ययः, यद्वा दर्शनज्ञानयोगेन, अव्ययः=जन्ममरणाद्यपायरहितत्वादविनाशी

=पूर्वशरीरत्यागानन्तरमपरशरीरग्रहणात्प्राक्च त्यक्तग्रहीष्यमाणभवयोरन्तरे मध्ये, विग्रहगताविति यावत्। बाह्यात्मा=बहिर्भवो बाह्य स चाऽसावात्मा च स तादृश, विग्रहगतौ ह्यौदारिकादिशरीरान्मुक्तेश्च रहितत्वरूपबहिर्भावादात्मनो बाह्यत्वमिति स भवान्तरे बाह्यात्मेति भाव। भवेदिति सम्बध्यते। तथा, देहे=शरीरे, शरीराधिष्ठानावस्थायाम्, अन्तरात्मा=अन्तर्मध्ये स्थित आत्माऽन्तरात्मा, भवेदितीहाऽपि सम्बध्यते। देहे तिष्ठन् ह्यात्मा देहस्याऽन्तरस्तीति व्यवहारादिति बोध्यम्। इति=एवम्प्रकारेण, त्रिविधः=एकोऽप्युपाधिभेदात्त्रिप्रकार., भवेदिति सम्बध्यते। एवञ्च परेष्टदेवस्य वर्णितमुक्तत्रैविध्यमस्यैव युक्तियुक्तम्। ततश्च नाऽन्यो वैशिष्ट्यमन्यदेवस्येति तात्पर्यम् ॥ १८ ॥

जिनशासनेष्टस्य महादेवस्य सकलत्वादिकमप्याह—

**सकलो दोषसम्पूर्णो निष्कलो दोषवर्जितः ।**
**पञ्चदेहविनिर्मुक्तः सम्प्राप्तः परमं पदम् ॥ १९ ॥**

सकल इति। स जिनशासनेष्टो महादेव इति प्रस्तावाल्लभ्यते। दोषसम्पूर्णः=दोषैर्जन्मजरादिभिर्दूषणैः सम्पूर्णोऽविकल. सन्, भवस्थतादशाया हि जिनात्मनोऽपि ते दोषा रागादयोऽपि च चरमादन्यस्मिन् भवे इति तदा स दोषसम्पूर्ण.। अत एव, सकलः=कलाभिर्भवावस्थाभाविगुणै सहित. सकल:, सगुण इति यावत्। आत्मा हि धृतदेहाद्युपाधि सगुण सकल इति वा कीर्त्यते इति बोध्यम्। दोषवर्जितः=दोषैरुक्तप्रकारैर्जन्मादिरागादिरूपैर्वर्जितो विनिर्मुक्तः, केवल–

=पूर्वशरीरत्यागानन्तरमपरशरीरग्रहणात्प्राक्च त्यक्तग्रहीष्यमाणभवयोरन्तरे मध्ये, विग्रहगताविति यावत् । बाह्यात्मा=बहिर्भवो बाह्यः स चाऽसावात्मा च स तादृश, विग्रहगतौ ह्यौदारिकादिशरीरान्मुक्तेश्च रहितत्वरूपबहिर्भावादात्मनो बाह्यत्वमिति स भवान्तरे बाह्यात्मेति भाव । भवेदिति सम्बध्यते । तथा, देहे=शरीरे, शरीराधिष्ठानावस्थायाम्, अन्तरात्मा=अन्तर्मध्ये स्थित आत्माऽन्तरात्मा, भवेदितीहाऽपि सम्बध्यते। देहे तिष्ठन् ह्यात्मा देहस्याऽन्तरस्तीति व्यवहारादिति बोध्यम् । इति=एवम्प्रकारेण, त्रिविधः=एकोऽप्युपाधिभेदात्त्रिप्रकार, भवेदिति सम्बध्यते । एवञ्च परेष्टदेवस्य वर्णितमुक्तत्रैविध्यमस्यैव युक्तियुक्तम् । ततश्च नाऽतो वैशिष्ट्यमन्यदेवस्येति तात्पर्यम् ॥ १८ ॥

जिनशासनेष्टस्य महादेवस्य सकलत्वादिकमप्याह—

**सकलो दोषसम्पूर्णो निष्कलो दोषवर्जितः ।**
**पञ्चदेहविनिर्मुक्तः सम्प्राप्तः परमं पदम् ॥ १९ ॥**

सकल इति । स जिनशासनेष्टो महादेव इति प्रस्तावाल्लभ्यते । **दोषसम्पूर्णः**=दोषैर्जन्मजरादिभिर्दूषणैः सम्पूर्णोऽविकलः सन्, भवस्थतादशायां हि जिनात्मनोऽपि ते दोषा रागादयोऽपि च चरमादन्यस्मिन् भवे इति तदा स दोषसम्पूर्ण । अत एव, **सकलः**=कलाभिर्भवावस्थामाविगुणैः सहित. सकल, सगुण इति यावत् । आत्मा हि धृतदेहाद्युपाधि सगुण सकल इति वा कीर्त्यते इति बोध्यम् । **दोषवर्जितः**=दोषैरुक्तप्रकारैर्जन्मादिरागादिरूपैर्वर्जितो विनिर्मुक्तः, केवल–

इति, "शिव शूली महेश्वर" इति चाऽमरः ।  त्रय =त्रित्वसङ्ख्या-विशिष्टा, भागाः=अंशाः, एको महादेवाऽऽत्मैव ब्रह्मविष्णुमहेश्वराख्यास्त्रयोंऽशा इति पौराणिका । ते च भागा जिनात्मन एवेति हृदयम् । ननु नैतत्प्रसिद्ध क्वाप्यागमादाविति चेत्तत्राह—ते=ब्रह्मविष्णुमहेश्वराख्यो भागा, एव=नत्वन्ये, ज्ञानचारित्रदर्शनात्=ज्ञान केवल ज्ञान चारित्र क्षायिक दर्शन केवल दर्शनम्, तत., तदपेक्ष्येत्यर्थ, यल्लोपे पञ्चमी । इतरेतरयोगद्वन्द्वेऽपि "सर्वो द्वन्द्वो विभाषैकवद्भवती"ति परिभाषणादेकवचनम् । न च समाहारो युज्यते, ते इत्यनेन विशकलितव्यक्तित्रयपरामर्शादुद्भूताऽवयवभेदविवक्षाया अवगमादिति ध्येयम् । च =समुच्चये । पुनरुक्ताः=पुन प्रतिपादिता, भवन्तीति शेष । ब्रह्मादिशब्दैर्ये भागा उच्यन्ते त एव ज्ञानादिशब्दैरपीत्युक्ता अपि पुनरुच्यन्ते । ज्ञानादिरूपा एवाऽर्हतो महादेवात्मनो भागा पर्याया ब्रह्मादयो नाऽन्ये, ब्रह्मादिशब्दैर्ज्ञानादय एवेहेष्टा इत्यग्रे स्फुटी भविष्यति। तस्मादर्हन्नेव त्र्यात्मक. । परेष्टदेवस्य त्वेकस्या मूर्त्तेर्ब्रह्मादिमूर्त्तिर्भागो न युज्यते, एकमूर्त्तौ मूर्त्तित्रयसन्निवेशाऽयोगात्, तदनुपदमेवोपपादयिष्यत इति ध्येयम् ॥ २० ॥

ननु ब्रह्मादिशब्दैर्ज्ञानादयोऽर्था अप्रतीता इति चेत्साहश्यमूललक्षणयैव तथावर्णनमिति गृहाण । नन्वेव परे तथा न मन्यन्ते, किन्त्वेकस्या मूर्त्तेरेव तिस्रो ब्रह्मादयो व्यक्तयो भागा इत्येव तेषामाशय इति चेत्, अनुपपद्यमानत्वान्न तत्र रुचिरित्यतोऽनुपपत्तिमुपपादयन्नाह—

एका मूर्तिस्त्रयो भागा ब्रह्मविष्णुमहेश्वराः ।
परस्परं विभिन्नानामेकमूर्तिः कथं भवेत् ? ॥ २१ ॥

एकामूर्तिरिति । मूर्तिः=देह, एका=असहायाऽद्वितीया, केवला वा "मूर्तिमत्करणकायमूर्तयो वेरसंहननदेहसम्पराः" इति हैम। 'एकोऽन्यार्थे प्रधाने च प्रथमे केवले तथा' इति विश्व । तत्र इत्यर्थमवलम्ब्यते । त्रयः=त्रित्वसंख्याविशिष्टाः ब्रह्मविष्णुमहेश्वराः =ब्रह्मविष्णुमहेश्वराख्यास्त्रिस्रो व्यक्तय, भागाः=अंशा कस्यचित् पदार्थस्येति शेष । अत्र विप्रतिपत्तिमाह—परस्परम्=अन्योन्यम्, विभिन्नानाम्=भेदवताम् नहि यो ब्रह्मा स एव विष्णु स एव महेश्वरो वाऽभिधानभेदत्वात्स्वरूपभेदाच्च, ततश्च ते परस्परं भिन्ना एवेति वाच्यानां तेषामित्यर्थ । एकमूर्तिः=एकाऽभिन्ना वा मूर्तिर्देहः, सा कथम्=केन प्रकारेण, भवेत्=स्यात्, एका नैव स्यादित्यर्थ । अभेदे हि मूर्तेरैक्यं संभवम् यथेन्द्रशक्रयो । भेदे च विभिन्ना मूर्तिर्यथा चैत्रमैत्रयो । भेदेऽपि मूर्तेरैक्ये जगद्विसंष्टुलं विपर्यस्तं वाऽऽपद्येत भेदश्च दुरुपपादः स्यात् । मूर्तिभेदे वाऽभेदस्य दुरुपपादत्वेऽस्मन्मतमुपसन्नमित्येकस्या व्यक्तेर्नाऽनेकाः व्यक्तयो भागा इति युक्तम् । तस्मात्प्रामाणिकदर्शनादेका व्यक्तित्रयो भागा इत्येव श्रद्धेयमिति भाव ॥ २१ ॥

अन्येऽस्या एव व्यक्तेर्मानि नानाऽभिधानानि, न तु परस्परं विभिन्नास्तिस्रो व्यक्तयो ब्रह्मविष्णुमहेश्वरा इति चेत्तत्समाधत्ते-

मित्याह—

**कार्यं विष्णुः किया ब्रह्मा कारणं तु महेश्वरः ।**
**कार्यकारणसम्पन्ना एकमूर्त्तिः कथं भवेत् ? ॥ २२ ॥**

कार्यमिति । **विष्णुः**=विष्णुपदवाच्यो देव, **कार्यम्**=क्रियाजन्यफलाश्रय, कार्यस्थानीय इत्यर्थ । क्रियते यदिति कर्मव्युत्पत्तेरिति चोध्यम् । **ब्रह्मा**=ब्रह्मपदवाच्यो देव, **क्रिया**=व्यापारस्थानीय., द्वारमिति यावत् । **तु**र्विशेषे भेदे च । **महेश्वर.**=महेश्वरपदवाच्यो देवः, **कारणम्**=जनकस्थानीय. । महेश्वरप्रेरणया ब्रह्मण शरीराद्विष्णोः प्रादुर्भाव इति पौराणिककथाऽनुसन्धानेनेत्थमुक्तिरिति ध्येयम् । तदित्थम्, **कार्यकारणसम्पन्ना** =कार्यकारणभावमापन्नास्ते ब्रह्मविष्णुमहेश्वरास्त्रयः, **एकमूर्त्ति** =अभिन्नतनु, **कथं भवेत्** ?=काका नैव कथमपि भवेदित्यर्थ । नहि पितृपुत्रयोरभिन्ना मूर्त्तिरिति कोऽपि सचेताः प्रतिपादयेत् । मूर्त्त्यभेदे च कार्यकारणभाव एव न स्यात्, तस्य व्यक्तिभेदनियतत्वात् । एवञ्चैकस्या एव व्यक्तेर्नानाऽभिधानानीति वाचोयुक्तेरप्यनवसर, एकव्यक्त्यभावात् । तदेव परोक्तदिशैकमूर्त्तिस्त्रयो भागा इत्यनुपपन्नमेवेति भाव ॥ २२ ॥

ननु यथा मृत्पिण्डस्यैकस्यैव कारणभूतस्य कपाल· क्रियास्थानीयो घटश्च कार्यस्थानीय इति वक्तुं शक्यम्, तथैकस्या एव व्यक्तेरवस्थाभेदात्त्रे त्रयो भागा इति चेत्तदपि नेत्याह—

**प्रजापतिसुतो ब्रह्मा माता पद्मावती स्मृता ।**
**अभिजिज्जन्मनक्षत्रमेकमूर्त्तिः कथं भवेत् ? ॥ २३ ॥**

प्रजापतिसुत इति । ब्रह्मा=ब्रह्मसंज्ञको देवः, प्रजापतिसुतः=प्रजापतिनाम्नो द्विजस्य सुतः पुत्रः, "आत्मजस्तनयः सूनुः सुतः पुत्रः" इत्यमरः । माता=जननी, ब्रह्मण इति सान्निध्यात्प्रतीयते । पद्मावती=तदाख्या प्रजापतिद्विजभार्या, स्मृता=प्रतिपादिता, पुराणेष्विति भावः । तथा, जन्मनक्षत्रम्=जन्मसमयुक्ते काले ब्रह्मणो जन्म तन्नक्षत्रं भम् 'नक्षत्रमृक्षं भं तारे' इत्यमरः । अभिजित्=अभिजिन्नामकम् । प्रजापतिभार्यायां पद्मावत्यां कुक्षौ ब्रह्माऽवतीर्ण इति पौराणिका इति भावः । तदेवं स्थिते, एकमूर्तिः कथं भवेत् ? । नहि येषां विभिन्नौ मातापितरौ जन्मकालश्च भिन्नस्तेऽभिन्नमूर्तयो दृष्टाः श्रुता वा, मातापितृभेदे एकस्या एव व्यक्तेरसम्भवस्यैव प्रसिद्धत्वात् । किञ्च तथात्वाभेकत्वे प्रजापतिसुतो ब्रह्मणोऽवतार इति विशेषेण व्यपदेशो निर्हेतुक एव स्यादिति नैकमूर्तिरिति भावः ॥ २३ ॥

ननु त्रिमार्गैकैव मूर्तिरस्तीति चेत्तदपि नेत्याह—

वसुदेवसुतो विष्णुर्माता च देवकी स्मृता ।
रोहिणी जन्मनक्षत्रमेकमूर्तिः कथं भवेत् ? ॥ २४ ॥

वसुदेवेति । विष्णुः=विष्णुसंज्ञको देवः वसुदेवसुतः=वसुदेवाख्यनृपपुत्रः माता=जननी च समुच्चये । विष्णोरिति सम्बन्धस्य लभ्यते । देवकी=तदाख्या वसुदेवनृपभार्या, स्मृता=कथिता, जन्मनक्षत्रम्=यस्मिन्नक्षत्रे जन्म तत् रोहिणी=तदाख्यम् । वसुदेवनृपभार्याया देवक्याः कुक्षौ विष्णुः कृष्णनाम्नाऽवततार । यदुक्तम्—"एते चांशकलाः पुंसः कृष्णस्तु भगवान् स्वयम्" इति पौराणिकाः । एवं

शूलधारक'=शूलस्य तदाख्यशस्त्र-
तृतीयः=विष्णु', शङ्खचक्राङ्क =
ादृश', एव प्रत्येकमङ्कभेदे सति,
ाकस्या मूर्त्तेर्विभिन्न चिह्न प्रसिद्धमिति
णाम् , एकस्याऽनेकचिह्नत्वे लोकानां
७ ॥

त्रैत्व समर्थ्य मुखाद्यङ्गवैलक्षण्येनाऽपि

नेत्रोऽथ महेश्वर. ।
मूर्त्तिः कथं भवेत् ? ॥ २८ ॥

चतुर्मुख'=चत्वारि चतु सङ्ख्यानि
=तथा, महेश्वरः, त्रिनेत्र =त्रीणि
एक भालस्थमित्येवं यस्य स तादृश',
ारो भुजा बाहवो यस्य स तादृश ,
चतुर्भुजत्वं त्रयाणामेव पुराणादा-
ग्रमिति चिन्त्यम् । एवमवयववैलक्षण्ये
। यो हि चतुर्मुख. सोऽष्टनेत्रोऽष्ट-
र्भुजश्चेति नैकमूर्त्तिस्ते इति तात्पर्यम्

गरुडः स एवैक यान यस्य स तादृशो गरुडवाहन, "गरुत्मान् गरुडस्तार्क्ष्यो वैनतेय खगेश्वर" इत्यमर । **भवेत्** । तदेव प्रत्येकं वाहनभेदे सति **एकमूर्त्तिः कथ भवेत् ?** । नह्येकमूर्त्ते देवस्य नित्यं विभिन्नवाहनविशिष्टतया ख्यातिः सम्भवति, विभिन्नवाहनत्वे स एवक वाहनमित्यनद्ध स्यात्, वाहनभेदेन विवेकेन तत्तद्देवग्रहश्च न स्यात् । जायते च तथैवेति नैकमूर्त्तिरिति भावः ॥

सम्प्रति करग्राह्यभेदेन मूर्त्तिभेदमाह—

**पद्महस्तो भवेद् ब्रह्मा शूलपाणि र्महेश्वरः ।**
**चक्रपाणिर्भवेद्विष्णुरेकमूर्त्तिः कथं भवेत् ? ॥ ३१ ॥**

पद्महस्त इति । **ब्रह्मा, पद्महस्तः**=पद्म कमल नित्य हस्ते यस्य स तादृश., पद्मपाणिरित्यर्थः । व्यधिकरणबहुव्रीहिरपि साधुरेव, अत एव सप्तम्या बहुव्रीहौ पूर्वप्रयोगनिषेधः सङ्गच्छते । "अवर्ज्यो हि व्यधिकरणबहुव्रीहिर्जन्माद्युत्तरपद" इति वामनश्चेति बोध्यम् । **भवेत्** । **महेश्वरः, शूलपाणिः**=शूल तदाख्यं शस्त्र नित्यं पाणौ यस्य स तादृशः, भवेदिति सम्बध्यते । **विष्णु, चक्रपाणि**=चक्र सुदर्शनाख्य चक्रमायुध नित्य पाणौ यस्य स तादृशः । **भवेत्** । ततश्च, **एकमूर्त्तिः कथ भवेत् ?** नह्येकमूर्त्तेर्देवस्य पाणौ विभिन्नानि वस्तूनि प्रसिद्धानि । यद्यपि चतुर्भुजत्वात्प्रत्येक भुजेषु वस्तुभेदो नाऽयुक्तः, तथापि तथासति विवेकेन ब्रह्मादिपरिज्ञान पद्मादिद्वारा नैव स्यात्, जायते च चक्रपाणिशब्दादिना विष्ण्वादेर्विवेकेनैव ग्रह इति तदनुरोधा त्पद्मादीनि विभिन्नमूर्त्तेरेव विशेषणानीति नैकमूर्त्तिरिति बोध्यम् ॥ ३१ ॥

कृष्णस्य च तृतीयत्वमित्यवधेयम् । शूलधारकः=शूलस्य तदाख्यशस्त्र-विशेषस्य धारकः, शूलाङ्क इत्यर्थः । तृतीयः=विष्णुः, शङ्खचक्राङ्कः= शङ्खश्चक्रं चाऽङ्कौ चिह्ने यस्य स तादृशः, एवं प्रत्येकमङ्कभेदे सति, एकमूर्त्तिः कथं भवेत् ? । नह्येकस्या मूर्त्तेर्विभिन्नं चिह्नं प्रसिद्धमिति चिह्नभेदाद्भिन्नैव मूर्त्तिर्ब्रह्मविष्णुमहेश्वरणाम्, एकस्याऽनेकचिह्नत्वे लोकानां परिचयव्यामोहापत्तेश्चेति भावः ॥ २७ ॥

तदेव चिह्नभेदेन विभिन्नमूर्त्तित्वं समर्थ्य मुखाद्यङ्गवैलक्षण्येनाऽपि तदुपपादयन्नाह—

**चतुर्मुखो भवेद् ब्रह्मा त्रिनेत्रोऽथ महेश्वरः ।**
**चतुर्भुजो भवेद् विष्णुरेकमूर्त्तिः कथं भवेत् ? ॥ २८ ॥**

चतुर्मुख इति । ब्रह्मा, चतुर्मुखः=चत्वारि चतुःसङ्ख्यानि मुखानि यस्य स तादृशः, अथ=तथा, महेश्वरः, त्रिनेत्रः=त्रीणि त्रित्वविशिष्टानि नेत्राणि द्वे यथावस्थे एकं भालस्थमित्येवं यस्य स तादृशः, भवेत्, विष्णुः, चतुर्भुजः=चत्वारो भुजा बाहवो यस्य स तादृशः, "भुजबाहू प्रवेष्टो दोः" इत्यमरः । चतुर्भुजत्वं त्रयाणामेव पुराणादा-वुक्तमिति न तावतेह वैलक्षण्यं साध्यमिति चिन्त्यम् । एवमवयववैलक्षण्ये सति, एकमूर्त्तिः कथं भवेत् ? । यो हि चतुर्मुखः सोऽष्टनेत्रोऽष्ट-बाहुश्चौचित्यात्स्यान्न तु त्रिनेत्रश्चतुर्भुजश्चेति नैकमूर्त्तिस्ते इति तात्पर्यम् ॥ २८ ॥

जन्मदेशभेदादपि भिन्नमूर्तित्वमित्याह—

मथुरायां जातो ब्रह्मा राजगृहे महेश्वरः ।
द्वारावत्यामभूद्विष्णुरेकमूर्तिः कथं भवेत् ? ॥ २९ ॥

मथुरायामिति । ब्रह्मा, मथुरायाम्=तदाख्यायां नगर्याम्, जातः=उत्पन्नः, महेश्वरः, राजगृहे=तदाख्ये नगरे जात इति सम्बध्यते । विष्णुः, द्वारावत्याम्=तदाख्यायां नगर्याम्, अभूत्=जातः कृष्णस्याऽपि मथुरायामेव जन्म, जरासन्धभयसन्त्रस्तः पश्चिमसमुद्रतटे द्वारावतीं नगरीं निर्माय तत्रैवावस्थितेः पुराणादौ प्रतिपादितमितीह चिन्त्यम् । एवं जन्मदेशभेदे सति, एकमूर्तिः कथं भवेत् ? । नैकस्या एव मूर्तेरनेकदेशे जन्मेति नैकमूर्तित्वमिति भावः ॥ २९ ॥

वाहनभेदेनाऽपि मूर्तेर्भेदमाह—

हंसयानो भवेद्ब्रह्मा वृषयानो महेश्वरः ।
तार्क्ष्ययानो भवेद्विष्णुरेकमूर्तिः कथं भवेत् ? ॥ ३० ॥

हंसयान इति । ब्रह्मा, हंसयानः=हंसेत्याख्यः प्रसिद्धः पक्षिविशेषो नित्यं स एवैक यानं वाहनं यस्य स तादृशो हंसवाहनः, "याने युग्यं पत्रं वाह्यं वहं वाहनधोरणे" इति हैम । भवेत्, महेश्वरः, वृषयानः=वृषो भद्राख्यो बलीवर्दो नित्यं यानं यस्य स तादृशो वृषवाहनः, भवेदिति सम्बध्यते । "उक्षा भद्रो बलीवर्द ऋषभो वृषभो वृषः" इत्यमरः । तथा विष्णुः, तार्क्ष्ययानः=तार्क्ष्यो

गरुडः स एवैक यान यस्य स तादृशो गरुडवाहन, "गरुत्मान् गरुडस्तार्क्ष्यो वैनतेय खगेश्वर" इत्यमर.। भवेत्। तदेव प्रत्येकं वाहनभेदे सति एकमूर्त्तिः कथं भवेत् ?। नह्येकमूर्त्ते र्देवस्य नित्य विभिन्नवाहनविशिष्टतया ख्यातिः सम्भवति, विभिन्नवाहनत्वे स एवक वाहनमित्यनद्ध स्यात्, वाहनभेदेन विवेकेन तत्तद्देवग्रहश्च न स्यात्। जायते च तथैवेति नैकमूर्त्तिरिति भावः ॥

सम्प्रति करग्राह्यभेदेन मूर्त्तिभेदमाह—

**पद्महस्तो भवेद् ब्रह्मा शूलपाणि र्महेश्वरः।**
**चक्रपाणिर्भवेद्विष्णुरेकमूर्त्तिः कथं भवेत् ? ॥ ३१ ॥**

पद्महस्त इति। ब्रह्मा, **पद्महस्तः**=पद्म कमल नित्य हस्ते यस्य स तादृश., पद्मपाणिरित्यर्थ.। व्यधिकरणबहुव्रीहिरपि साधुरेव, अत एव सप्तम्या बहुव्रीहौ पूर्वप्रयोगनिषेध सङ्गच्छते। "अवर्ज्यो हि व्यधिकरणबहुव्रीहिर्जन्माद्युत्तरपद" इति वामनश्चेति बोध्यम्। **भवेत्**। **महेश्वरः, शूलपाणिः**=शूल तदाख्यं शस्त्र नित्यं पाणौ यस्य स तादृश', भवेदिति सम्बध्यते। **विष्णु, चक्रपाणि**=चक्र सुदर्शनाख्य चक्रमायुध नित्यं पाणौ यस्य स तादृश'। **भवेत्**। ततश्च, **एकमूर्त्ति कथं भवेत् ?** नह्येकमूर्त्तेर्देवस्य पाणौ विभिन्नानि वस्तूनि प्रसिद्धानि। यद्यपि चतुर्भुजत्वात्प्रत्येक भुजेषु वस्तुभेदो नाऽयुक्तः, तथापि तथासति विवेकेन ब्रह्मादिपरिज्ञानं पद्मादिद्वारा नैव स्यात्, जायते च चक्रपाणिशब्दादिना विष्ण्वादेर्विवेकेनैव ग्रह इति तदनुरोधा त्पद्मादीनि विभिन्नमूर्त्तेरेव विशेषणानीति नैकमूर्त्तिरिति बोध्यम् ॥ ३१ ॥

जन्मदेशभेदादपि विभिन्नमूर्तित्वमित्याह—

मथुरायां जातो ब्रह्मा राजगृहे महेश्वरः ।
द्वारावत्यामभूद्विष्णुरेकमूर्तिः कथं भवेत् ? ॥ २९ ॥

मथुरायामिति । ब्रह्मा, मथुरायाम्=तदाख्यायां नगर्याम्, जातः=उत्पन्नः, महेश्वरः, राजगृहे=तदाख्ये नगरे, जात इति सम्बध्यते । विष्णुः, द्वारावत्याम्=तदाख्यायां नगर्याम्, अभूत्=जातः कृष्णस्याऽपि मथुरायामेव जन्म, जरासन्धनृपभयतः पश्चिमसमुद्रतटे द्वारावतीं नगरीं निर्माय तत्रैवासेत्येवं पुराणादौ प्रतिपादितमितीदं चिन्त्यम् । एवं जन्मदेशभेदे सति, एकमूर्तिः कथं भवेत् ? । नैकस्या एव मूर्तेरनेकदेशे जन्मेति नैकमूर्तित्वमिति भावः ॥ २९ ॥

वाहनभेदेनाऽपि मूर्ते र्भेदमाह—

हंसयानो भवेद्ब्रह्मा वृषयानो महेश्वरः ।
तार्क्ष्ययानो भवेद्विष्णु रेकमूर्तिः कथं भवेत् ? ॥ ३० ॥

हंसयान इति । ब्रह्मा, हंसयानः=हंसवाहनः 'प्रसिद्ध' पक्षिविशेषो नित्यं स एव यानं वाहनं यस्य स तादृशो हंसवाहनः, "यानं युग्यं पत्रं वाह्यं वहं वाहनधोरणे" इति हैमः । भवेत्, महेश्वरः, वृषयानः=वृषो भद्राख्यो बलीवर्दो नित्यं यानं यस्य स तादृशो वृषवाहनः, भवेदिति सम्बध्यते । 'उक्षा भद्रो बलीवर्द ऋषभो वृषभो वृषः" इत्यमरः । तथा, विष्णुः, तार्क्ष्ययानः=तार्क्ष्यो

गरुड. स एवैकं यान यस्य स तादृशो गरुडवाहन, "गरुत्मान् गरुडस्ताक्ष्यों वैनतेयः खगेश्वर" इत्यमरः। भवेत्। तदेव प्रत्येक वाहनभेदे सति एकमूर्त्तिः कथ भवेत्? । नह्येकमूर्त्ते र्देवस्य नित्य विभिन्नवाहनविशिष्टतया स्थानि सम्भवन्ति, विभिन्नवाहनत्वे स एवैक वाहनमित्यवद्ध स्यात्, वाहनभेदेन विवेकेन तत्तद्देवग्रहश्च न स्यात्। जायते च तथैवेति नैकमूर्त्तिरिति भाव ॥

सम्प्रति करग्राह्यभेदेन मूर्त्तिभेदमाह—

**पद्महस्तो भवेद् ब्रह्मा शूलपाणि र्महेश्वरः ।**
**चक्रपाणिर्भवेद्विष्णुरेकमूर्त्तिः कथं भवेत् ? ॥ २१ ॥**

पद्महस्त इति। ब्रह्मा, पद्महस्तः=पद्म कमल नित्यं हस्ते यस्य स तादृश., पद्मपाणिरित्यर्थ। व्यधिकरणबहुव्रीहिरपि साधुरेव, अत एव सप्तम्या बहुव्रीहौ पूर्वप्रयोगनिषेध. सङ्गच्छते। "अवर्ज्यो हि व्यधिकरणबहुव्रीहिर्जन्माद्युत्तरपद" इति वामनश्चेति बोध्यम्। भवेत्। महेश्वरः, शूलपाणिः=शूल तदाख्यं शस्त्र नित्यं पाणौ यस्य स तादृश., भवेदिति सम्बध्यते। विष्णु, चक्रपाणि=चक्र सुदर्शनाख्य चक्रमायुधं नित्यं पाणौ यस्य स तादृश। भवेत्। ततश्च, एकमूर्त्ति· कथ भवेत्? नह्येकमूर्त्तेर्देवस्य पाणौ विभिन्नानि वस्तूनि प्रसिद्धानि। यद्यपि चतुर्भुजत्वात्प्रत्येक भुजेषु वस्तुभेदो नाऽयुक्तः, तथापि तथासति विवेकेन ब्रह्मादिपरिज्ञानं पद्मादिद्वारा नैव स्यात्, जायते च चक्रपाणिशब्दादिना विष्ण्वादेर्विवेकेनैव ग्रह इति तदनुरोधात्पद्मादीनि विभिन्नमूर्त्तेरेव विशेषणानीति नैकमूर्त्तिरिति बोध्यम् ॥ २१ ॥

अथ जन्मकालभेदेन मूर्तिभेदमाह—

कृते जातो भवेद्ब्रह्मा त्रेतायां च महेश्वरः ।
विष्णुश्च द्वापरे जात एकमूर्तिः कथं भवेत् ? ॥ १२ ॥

कृत इति । ब्रह्मा, कृते=कृतयुगे, सत्ययुग इत्यर्थः । चतुर्षु युगचतुष्टयेषु प्रथमे युगे इति यावत् । जातः=अवतीर्णः, भवेत् । महेश्वरः, त्रेतायाम्–तदाख्ये द्वितीये युग इत्यर्थः । च समुच्चये । जात इति सम्बध्यते । विष्णुः, द्वापरे=तदाख्ये तृतीये युग इत्यर्थः, जातः, च समुच्चये । तदेवं जन्मकालस्यैक्यमभिमतस्यान्तरे एकमूर्तिर्न कथमपि युज्यते तदाह–एकमूर्तिः कथं भवेदिति । नह्येकमूर्तेर्नैकेषु कालेषु पुनः पुनर्जन्म कथमपि योग्यमसम्भवात्, तस्मात्ते त्रयो भवा नैकमूर्तेः कथमप्युपपन्ना इति तन्निर्णयैव । अथान्यकालस्यैव चैतन्यस्याऽवतारभेदेन पित्रादिजन्मकालान्तरमेव सम्भवति । तथाऽपि कार्यकारणरूपता समकालस्थितिविभागानां च कथमपि नोपपद्यते, एकस्य चेतनस्यैकस्मिन् काले नानाशरीराऽधिष्ठानविरोधात्कार्यकारणरूपतायाः भेदे सत्येवोपपत्तेश्चेति नैकमूर्तिः । किञ्च न मूर्तिचेतनोऽपि त्वमूर्त इति विभागत्वमेकमूर्ते जन्मतदनिष्पन्नत्वमभेदेऽसम्भविकेन ॥ १२ ॥

तदेवं परेषदेवस्यैकमूर्तेर्विभागत्वमप्रमाणमिति विस्तरेणोपपाद्य, प्रकृतं 'ज्ञान चारित्रदर्शनादि'ति तद्विशदं निरूपयन्नाह—

ज्ञानं विष्णुः सदा प्रोक्तं ब्रह्मा चारित्रमुच्यते ।
सम्यक्त्वं तु शिवः प्रोक्तमर्हन्मूर्तिस्त्रयात्मिका ॥ १३ ॥

ज्ञानमिति। **ज्ञानम्**=सम्यग्ज्ञानं केवलज्ञानं च, **सदा**=सर्वदा, न तु यदाकदाचिदेव, **विष्णुः**=विष्णुरित्येवम्। **प्रोक्तम्**=प्रतिपादितम्, तज्ज्ञैरिति शेषः। व्यापकत्वाद्धि विष्णुरित्युच्यते पालकत्वाच्च। एतद्गुणद्वयं च ज्ञाने, केवलज्ञानस्य सर्वद्रव्यपर्यायविषयत्वेन व्यापकत्वात्सकलकर्मक्षयहेतुतया भवभयात्पालकत्वाच्चेति ज्ञानं विष्णुरिति प्रोक्तम्। तथा, **चारित्रम्**=सर्वसावद्यविरतिः, **ब्रह्मा**=ब्रह्मपदवाच्यम्, **उच्यते**=प्रतिपाद्यते। ब्रह्म हि ब्रह्मचर्यम्, तदेव च सत्याऽहिंसाऽस्तेयाऽपरिग्रहरूपमहाव्रतसर्गमूलम्। ब्रह्मचर्यं विना सत्यादेर्यथावत्पालनाऽसम्भवात्। ब्रह्मा च जगत्स्रष्टेति सर्वजगन्मूलमिति द्वयो र्ब्रह्मणोरैक्यम्। किञ्च चारित्रमेव पारमार्थिको ब्रह्मा, सत्यादिगुणाऽऽधानादिना भवक्षयपूर्वकसिद्धिसर्गमूलत्वात्। इतरस्तु ब्रह्मा भवसर्जक इति भवपरम्परावर्धक इति सर्जनधर्मसाधर्म्यादेव तस्य ब्रह्मत्वमिति निकृष्टत्वाद्धेय एवेत्याशय। एवम्, **तुः** पुनरर्थे, **सम्यक्त्वम्**=तत्त्वार्थश्रद्धानात्मकं सम्यग्दर्शनम्, **शिवः**=शिवपदवाच्यः, **प्रोक्तम्**=उपवर्णितम्। शिवो हि पुराणादौ जगत्संहारको वर्णितः, सम्यक्त्वमपि च कर्मक्षयोपशमहेतुगुणवृद्धिक्रमेण सर्वकर्मक्षयपूर्वकभवक्षयहेतुश्चेति तदेव परमार्थतः शिव इति तात्पर्यम्। तदेवम्, **अर्हन्मूर्त्तिः**=अर्हतस्तीर्थङ्करस्य मूर्त्तिस्तनुः, "स्त्रियां मूर्त्तिस्तनुस्तनू"रित्यमरः। **त्रयात्मिका**=त्रये चारित्रज्ञानदर्शनात्मका ब्रह्मविष्णुमहेश्वरा आत्मा स्वरूपं यस्याः सा तादृशी। केवलज्ञानादेरर्हत्येव सत्त्वात्स एवैकमूर्त्तिस्त्रयो भागाः। तदेतत्सुष्ठूक्तम् "एकमूर्त्तिस्त्रयो भागा ब्रह्मविष्णुमहेश्वराः। त एव च पुनरुक्ता ज्ञानचारित्रदर्शनादि"ति। कस्याऽपि देवस्य त्र्यात्मकत्वस्योक्तप्रकारेणाऽ-

सम्भवस्य प्रतिपन्नत्वात् । तस्मादयमेव महादेवो नाऽन्य इति स्थितम् ॥ १३ ॥

यत्तु परैर्महादेव क्षित्याद्यष्टमूर्तिः प्रतिपाद्यते, सोऽष्टमूर्तिः परमार्थतो गुणाष्टकसद्भावादेवेत्याह—

क्षितिजलपवनहुताशनयजमानाऽऽकाशसोमसूर्याख्याः ।
इत्येतेऽष्टौ भगवति गीता वीतरागे सुगुणाः ॥ १४ ॥

क्षितीति । भगवति=भग ऐश्वर्यादि, यदुक्तम् " ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः । ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणे"ति । सोऽस्याऽस्तीति स भगवांस्तस्मिन्, ईश्वर इत्यर्थः । वीतरागे=वीतो दूरीभूतो राग उपलक्षणत्वाद्रागद्वेषादयो दोषा यतः स वीतरागस्तस्मिन्, निस्पृहत्वगुणयुक्तसत्स्वभाव इत्यर्थः । क्षितिजलपवनहुताशनयजमानाऽऽकाशसोमसूर्याख्याः=क्षितिः पृथिवी, जलं प्रसिद्धं सलिलम्, पवनो वायुः, हुताशनोऽग्निः, यजमानो व्रती, आकाशो गगनम्, सोमश्चन्द्रः, सूर्यो रविः, एता आख्या अभिधानानि येषां गुणानां ते तथा क्षित्यादिनामानः, 'आदेष्टा स्याद्यजमाने व्रती । याजको यज्वा मखेष्व'पि हैमः । इति=उक्तप्रकाराः, एते=क्षित्यादयः, अष्टौ=अष्टसङ्ख्याकाः सुगुणाः=विशिष्टधर्माः, विशेषणानीत्यर्थः । गीताः=वर्णिताः । परैर्महादेवस्य द्रव्यात्मकक्षित्यादिरूपं प्रतिपादितं तदत्यन्तमसमञ्जसम् । यदि हि परैर्देवस्य क्षित्यादिरूपत्वं स्यात्, तर्हि स महादेव एव स्यात्क्षित्यादिर्वा न तूभये, अभेदेऽन्यतरस्य विरोधात् । एकस्य विभिन्नानाकारतथारूपताऽसम्भवात् । गुणास्तु विभिन्ना

अप्यनेके एकस्मिन्नपीति गुणाऽष्टकसद्भावादर्हन्नेवाऽष्टमूर्त्तिरिति तात्पर्यम् । आर्यावृत्तम् ॥ ३४ ॥

क्षित्यादिगुणान्निरूपयन्नाह—

**क्षितिरित्युच्यते क्षान्तिर्जलं या च प्रसन्नता ।**
**निःसङ्गता भवेद्वायु र्हुताशो योग उच्यते ॥ ३५ ॥**

क्षितिरिति । **क्षान्तिः**=शक्तौ सत्यामप्यपकारिष्वपि क्षमा, अपराधादिसहनात्मको गुणविशेष इत्यर्थः । अर्हत इति षष्ठ्यन्तं सर्वत्र प्रस्तावात्सम्बन्धनीयम् । **येत्युद्देश्ये, प्रसन्नता**=साकल्येन कर्ममलाऽभावाद्रागादिदोषाऽभावाच्चाऽऽत्मनो निर्विकल्पत्वान्निरुपाधित्वाच्च निर्मलता, विशुद्धता स्वच्छता वेत्यर्थः । "प्रसन्नोऽच्छ" इत्यमरः । येति यच्छब्द-बलात्तदिति लभ्यते । **जलम्**=सलिलम्, उच्यत इति सम्बध्यते । चोऽन्वाचये । जलमपि निर्मलमिति प्रसन्नता जलतत्त्वमिति भावः । तथा, **निःसङ्गता**=निर्लेपता, वीतरागतेत्यर्थः । **वायुः**=पवनः, **भवेत्**=स्यात् । पवनो ह्यस्निग्धत्वान्न कुत्राऽपि सजति, तथाऽर्हन्नपि वीतरागत्वान्नि-सङ्ग इति निःसङ्गता वायुतत्त्वमिति बोध्यम् । एवम्, **योगः**=शुक्ल-ध्यानम्, **हुताशः**=अग्निः, यथा हि हुताशः इन्धनादिदाहकस्तथा योगोऽपि सर्वकर्मेन्धनदाहक इति योगोऽग्नितत्त्वम्, **उच्यते**=प्रतिपाद्यते ॥ ३५ ॥

**यजमानो भवेदात्मा तपोदानदयादिभिः ।**
**अलेपकत्वादाकाशसङ्काशः सोऽभिधीयते ॥ ३६ ॥**

यजमान इति । आत्मा=भईत्सत्त्वोपमध्येमनः, तपोदानदया-दिभिः=तपःषष्ठाऽष्टमक्षपणादिकम् । दानं दीक्षाग्रहणसमयम् वार्षिकदानादिकम् । दया निर्हेतुकसर्वभूतानुकम्पा, सर्वभूतादेशेनाऽर्हितोऽस्ते स्वात्मस्य सर्वसावद्यनिरतत्वाच्चेतिभाव । भावित्य प्रभाऽपरिमितानि, तैःकृत्वा, यजमानः=याजक, मञ्जतर । दयादिकमेव हि यथार्थं यजनम्, हिंसादिसार्थ तु दुरिताऽनुबन्धित्वादशुभत्वात्साधक कर्मेति सत्तुल्यजनमेवेति भावः । तथा सः=भईदात्मा, अलेपकत्वात्=कर्ममलक्लेपसाधमाऽऽत्मवद्न्यत्वात्संवृतत्वाच्छुद्धत्वात निर्मलानि तिलेषु लेपयोग्यतया भव्यमावादिति कर्मकलात्मकलेपाऽविरक्यादित्यर्थ । आकाशसदृशः=आकाशोपमः, ' निम्नस्थसनीकाशसमीकाशोपमास्त्वम'' इत्यमर । अभिधीयते=गीयते । यथाऽऽकाशोऽमूर्तत्वात्सर्वस्मान्विलेपात्योग्यतयाऽप्यमपि निर्गुणत्वादिति तस्य निर्लिप्तताऽऽकाशवत्वमिति भावः ॥ १६ ॥

सौम्यमूर्तिरुचिश्चन्द्रो वीतरागः समीक्ष्यते ।
ज्ञानप्रकाशकत्वेन स आदित्योऽभिधीयते ॥ १७ ॥

सौम्यमूर्तिरुचिरिति । वीतरागः=रागादिरहितोऽर्हन्, सौम्यमूर्तिरुचिः=सौम्या प्रिया प्रशान्ताऽनुद्वेगकरा मनोज्ञा च मूर्तिरुचिः शरीरप्रभा यस्य स तादृशः सन्, यदुक्तम्—" मासां मनै परिक्षोण्वैत्वामिसि चन्द्रमा । चकोराणामिव दृशां ददासि परमं मुदमि''ति । सौम्य च मधुरं प्रियमि''ति हैमः । " स्तुः प्रभारुचिरि''त्यमर । अत एव, चन्द्रः = चन्द्र इव, समीक्ष्यते=अवलो

च्यते। चन्द्रोऽपि हि प्रियदर्शन इति वीतरागस्य सौम्यमूर्त्तिरुचिश्चन्द्र-तत्त्वमित्याशयः। तथा, सः=वीतरागः, ज्ञानप्रकाशकत्वेन=ज्ञानस्य सम्यग्ज्ञानस्य प्रकाशकत्वेनोपदेशादिनोद्बोधकत्वेन, आदित्यः=सूर्य इव, अभिधीयते=कीर्त्यते। सूर्यो हि तमोनाशपूर्वकं जगत्प्रकाशयति, तथा वीतरागोऽपि सदुपदेशेनाऽज्ञानं विनाश्य सम्यग्ज्ञानं प्रकाशयतीति ज्ञानप्रकाशकत्वं वीतरागस्य सूर्यतत्त्वम्। यदुक्तम्—"यःपरात्मा पर-ज्योतिः परमः परमेष्ठिनाम्। आदित्यवर्णं तमसः परस्तादामनन्ति यमि"ति भावः। तदेवं गुणगुणिनोरभेदनये उक्तप्रकारेण क्षित्याद्यात्मकक्षमाद्यष्ट-गुणात्मकत्वादर्हन्नष्टमूर्त्तिः। परेष्टो महादेवस्तु विभिन्नव्यक्तीनामभेदाऽ-सम्भवस्य प्रागुपपादितत्वाच्छत्रुवधादिप्रवृत्ततया क्षमाद्यभावनिश्चयाच्च शब्दमात्रोऽष्टमूर्त्तिरिति हृदयम्॥ ३७॥

तदेवं गुणतोऽर्हन्नेव महादेव इति स एव नमस्करणीय इत्याह—

**पुण्यपापविनिर्मुक्तो रागद्वेषविवर्जितः।**
**अर्हंस्तस्य नमस्कारः कर्त्तव्यः शिवमिच्छता॥ ३८॥**

पुण्यपापविनिर्मुक्त इति। अर्हन्=वीतरागस्तीर्थङ्करः, सर्वैःसुरा-दिभिः कृतां पूजामर्हतीति स तादृशः। यदुक्तम्—"यस्मादर्हति पूजामर्हन्नेवोत्तमोत्तमो लोके। देवर्षिनरेन्द्रेभ्यः पूज्येभ्योऽप्यन्यसत्त्वा-नामि"ति। रागद्वेषविवर्जितः=रागेणाऽऽसक्त्या द्वेषेणाऽप्रीत्या चोपलक्षणत्वान्मोहकषायादिभिश्च विवर्जितो रहितः। यदुक्तम्—"न केवलं रागमुक्तं वीतराग! मनस्तव। वपुःस्थितं रक्तमपि क्षीरधारा-

सहोदरमि"ति । अत एव, पुण्यपापविनिर्मुक्तः=पुण्यैश्चास्मै-विहितकर्मजन्यैः पापैश्चास्मैर्निषिद्धकर्मजन्यैश्च कर्मभिः, शुभैरशुभैरे-त्यर्थः । विनिर्मुक्तो रहितः, शून्य इत्यर्थ । वीतरागत्वात्सोऽस्मात्कर्म-बन्धाऽसम्भवात्सञ्चितप्रारब्धानां क्षयाच्च । यदुक्तम्— "भवबीज-रविना शमिना शमवर्त्तिना । त्वया काममकृष्यन्त कुटिलः कर्म-कण्टकः" इति, "अनन्तकालप्रचितमनन्तमपि सर्वथा । त्वत्तो नान्यः कर्मकक्षमुन्मूलयति मूलतः" इति च । न ह्यन्यो देवो वीतराग-द्वारादिपरिग्रहैर्निग्रहानुग्रहसम्पन्नत्वात् सर्वविधवस्तुत्यागपक्षोऽर्हन्नेवेति भावः । तस्माद्धेतोरित्यर्थोऽवगम्यते । शिवम्=सकलकल्याणम्, इच्छा-ऽनभिष्वङ्गता श्रेयोऽर्थिना अनेनेति विभक्त्यर्थः । तस्य=वीतरागस्य निर्ममस्यार्हतः, नमस्कारः=प्रणाम उपलक्षणत्वात्प्रभक्तिरित्यर्थः । कर्त्तव्यः=विधेयः रागादिनाशस्तु त्वय्यस्ति इति तस्य नमस्कारो विनाश भवितुमर्हतीति । यदुक्तम्— 'शान्तसीमानि दध्मस्तं मयेत्यहो तारकः । तस्मात्त्वं मे किंमोऽसि भाव । तारय तारये"ति भाव ॥ २८ ॥

एवं गुणतो महादेवत्वं प्रतिपाद्य शब्दतस्तदाह—

अकारेण भवेद्विष्णू रेफे ब्रह्मा व्यवस्थितः ।
हकारेण हरः प्रोक्तस्तस्यान्ते परमं पदम् ॥ २९ ॥

अकारेणेति । अकारेण=कण्ठ्येन ह्रस्वस्वरेणाऽक्षररूपे "अर्हं" इत्यक्षरपटके प्रथमवर्णेनेत्यर्थः । विष्णुः=विष्णुवाचक-भवेत्=स्यात् । अर्हं इति पदमिति शेष । विष्णुवाचकत्वमुपपत्त्या

वकारसत्त्वादर्हँ इतिपदघटकोऽकारः स्वघटितनामलक्षकनामैकदेशवत् स्वघटितपदलक्षक इति भवति 'अर्हँ' इनि पदमच्युतात्मकम् । अच्युतश्च विष्णुपर्याय इति सुष्ठूक्त"मकारेण भवेद्विष्णुरि"ति । "अकारो वासुदेव स्यादि"त्येकाक्षरकोपाच्चेति वोध्यम् । एवञ्च "अर्हँ" इतिपदं शब्दतो विष्ण्वात्मकमिति समाहितम् । **रेफे**='अर्हँ' इत्यक्षरघटकरेफे, **ब्रह्मा**=ब्रह्मवाचको ब्रह्मशब्द, **व्यवस्थितः**=व्यवस्थया स्थितः । व्यवस्था चाऽवयवेऽवयविन. समवेतत्वस्य प्रसिद्धत्वाद्ब्रह्मशब्द· स्वघटकरेफवृत्ति, स रेफश्च "अर्हँ" इति पदस्थरेफेणाऽनुकृत इत्यनुकार्याऽनुकारणयोरभेद इत्येव रूपा । यद्वोक्तन्यायेन रेफो रेफघटितब्रह्मपदलक्षक इति रेफे ब्रह्मा व्यवस्थित इत्युच्यते । एतेन शब्दतो ब्रह्मात्मत्व प्रदिपादितमवगन्तव्यम् । तथा, **हकारेण**="अर्हँ" इतिपदघटकेन महाप्राणेन वर्णेन, **हर**= महेश्वर', **प्रोक्तः**=प्रतिपादित, तत्प्रतिपादन चाऽकारेण विष्णुवदेति न विस्मर्त्तव्यम् । नन्वेवमर्हतस्त्रयात्मकत्व शब्दत उपपादितमेवेति "अर्हँ" इत्यक्षरे उपरिस्थितस्याऽनुनासिकस्य किं प्रयोजनमिति चेत्तत्राह—**तस्येति** । अर्हँ इतिपदेऽकारोत्तररेफोत्तरवर्त्तिहकारस्येत्यर्थ । **अन्ते**=पर्यवसाने, विराम इत्यर्थ' । उपरीति यावत् । **परमम्**=सर्वोच्चत्वात्सुदुर्लभत्वात्सिद्धैरेव प्राप्यत्वाच्च सर्वान्तिमम्, **पदम्**=स्थानम्, ईषत्प्राग्भाराख्यमित्यर्थ । नहि तत उपरि किञ्चित्पदमिति तत्परममेव पद भवति । तदाकारश्चाऽर्धचन्द्राकृतिरनुनासिकरेखातुल्य, विन्दुश्च तत्स्थसिद्धाऽनुकृति । एवञ्चाऽनुनासिको रेखागवयन्यायेन सिद्धशिलाऽनुकृतिरर्हतो ब्रह्माद्यपेक्षयाऽप्युच्च-

षिक स्वरूपमिति बोध्यम् । अर्हत इति प्रस्तावाल्लभ्यते । एवञ्च केवल ज्ञान ज्ञानानामादिभूतमात्मस्वरूपत्वात्, मत्यादिकं ज्ञानञ्चौपाधिकत्वादागन्तुकत्वात्परवर्तीति तदादिभूत ज्ञानमकारेण मातृकापाठेऽर्हच्छब्दे चाऽऽदिभूतेन लक्ष्यते, तदाह—अकारः= इति । तेन= आदिधर्मस्य मोक्षस्य च प्रदेशकत्वेन केवलज्ञानस्वरूपत्वेन चाऽर्हता । अकारः=अर्हन्निदिपदघटकोऽकार, प्रोच्यते=कीर्त्यते । सर्वप्रथमं धर्मस्य मोक्षस्य च प्रदेशकः केवलज्ञानवाश्चाऽर्हन्नेवेत्यादिभूतोऽकारो लक्षयत्यर्हत्पदघटक इति सारार्थ । एतद्वैशिष्ट्यं चाऽर्हत्येव नाऽन्यत्रेति स एव नमस्करणीयो नाऽन्योऽनीदृश इति हृदयम् ॥ ४० ॥

अथाऽर्हत्पदघटक रेफं निरूपयन्नाह—

**रूपिद्रव्यस्वरूपं वा दृष्ट्वा ज्ञानेन चक्षुषा ।**
**दृष्ट लोकमलोक वा रकारस्तेन प्रोच्यते ॥ ४१ ॥**

रूपीत्यादि । **ज्ञानेन**=मतिश्रुत्यवध्यात्मकेन, तद्रूपेणेत्यर्थ. । **चक्षुषा**=नेत्रेण, न तु चर्मचक्षुषा, **रूपिद्रव्यस्वरूपम्**=रूपि मूर्त यद्द्रव्यमणुस्कन्धभेदभिन्नपुद्गलात्मक द्रव्य तस्य यत्स्वरूपमुत्पादव्ययध्रौव्यात्मक समान्यविशेषनित्याऽनित्यत्वसदसत्त्वाऽभिलाप्याऽनभिलाप्यत्वभेदाभेदाद्यनन्तधर्मात्मकत्वादनेकान्तात्मकं च तत्त्वम्, **दृष्ट्वा**=ज्ञात्वा, ज्ञानचक्षुषा हि दर्शन ज्ञानमेवेति बोध्यम् । **वा**=तथा, अनन्तरमिति शेष । **लोकम्**=चतुर्दशरज्जुप्रमाणमवगाढधर्मादिद्रव्योपाधिकाऽऽकाशप्रदेशात्मकम्, लक्षणया तत्स्थ त्रैकालिकसर्वद्रव्यपर्यायम्, **अलोकम्**= लोकाद्बहिर्भूतमाकाशम्, **वेति**=समुच्चये । **दृष्टम्**=ज्ञातम् । **ज्ञानेन**

थिक स्वरूपमिति बोध्यम् । अर्हत इति प्रस्तावाल्लभ्यते । एवञ्च केवलं ज्ञान ज्ञानानामादिभूतमात्मस्वरूपत्वात्, मत्यादिकं ज्ञानञ्चौपाधिकत्वादागन्तुकत्वात्परवर्तीति तदादिभूतं ज्ञानमकारेण मातृकापाठेऽर्हच्छब्दे चाऽऽदिभूतेन लक्ष्यते, तदाह—**अकारः**= इति । **तेन**= आदिधर्मस्य मोक्षस्य च प्रदेशकत्वेन केवलज्ञानस्वरूपत्वेन चाऽर्हतः । **अकारः**=अर्हन्निदिपदघटकोऽकारः, **प्रोच्यते**=कीर्त्त्यते । सर्वप्रथमं धर्मस्य मोक्षस्य च प्रदेशकः केवलज्ञानवांश्चाऽर्हन्नेवेत्यादिभूतोऽकारो लक्षयत्यर्हत्पदघटक इति सारार्थः । एतद्वैशिष्ट्यं चाऽर्हत्येव नाऽन्यत्रेति स एव नमस्करणीयो नाऽन्योऽनीदृश इति हृदयम् ॥ ४० ॥

अथाऽर्हत्पदघटकं रेफ निरूपयन्नाह—

**रूपिद्रव्यस्वरूपं वा दृष्ट्वा ज्ञानेन चक्षुषा ।**
**दृष्ट लोकमलोक वा रकारस्तेन प्रोच्यते ॥ ४१ ॥**

रूपीत्यादि । **ज्ञानेन**=मतिश्रुत्यवध्यात्मकेन, तद्रूपेणेत्यर्थः । **चक्षुषा**=नेत्रेण, न तु चर्मचक्षुषा, **रूपिद्रव्यस्वरूपम्**=रूपि मूर्त्त यद्द्रव्यमणुस्कन्धभेदभिन्नपुद्गलात्मक द्रव्य तस्य यत्स्वरूपमुत्पादव्ययध्रौव्यात्मक समान्यविशेषनित्याऽनित्यत्वसदसत्त्वाऽभिलाप्याऽनभिलाप्यत्वभेदाभेदाद्यनन्तधर्मात्मकत्वादनेकान्तात्मकं च तत्त्वम्, **दृष्ट्वा**=ज्ञात्वा, ज्ञानचक्षुषा हि दर्शन ज्ञानमेवेति बोध्यम् । **वा**=तथा, अनन्तरमिति शेषः । **लोकम्**=चतुर्दशरज्जुप्रमाणमवगाढधर्मादिद्रव्योपाधिकाऽऽकाशप्रदेशात्मकम्, लक्षणया तत्स्थ त्रैकालिकसर्वद्रव्यपर्यायम्, **अलोकम्**=लोकाद्बहिर्भूतमाकाशम्, **वेति**=समुच्चये । **दृष्टम्**=ज्ञातम् । ज्ञानेन

ऽगारादिषु ममत्वानि, परीषहाः क्षुत्तृष्णादयो द्वाविंशतिविधाः परीषहपदवाच्याश्च, हताः=विनाशिताः, मोहास्त्यक्ता परीषहाश्च सहिता इत्यर्थः। मोहस्य त्यागः परीषहस्य सहनं च नाशस्तयोरिति बोध्यम्। यस्य च न रागद्वेषौ तस्यैव मोहादिजय इति भावः। तथा, **कर्माणि**=शुभाऽशुभात्मकानि सर्वाण्येव पापपुण्याभिधानान्यास्रवजन्यानि कर्माणि, **हतानि**=परिशाटितानि, यदुक्तम्—"अनन्तकालप्रचितमनन्तमपि सर्वथा। त्वत्तो नाऽन्यः कर्मकक्षमुन्मूलयति मूलत" इति। **तेन**=रागद्वेषमोहपरीषहकर्महननेन हेतुना, **हकारः**=अर्हत्पदघटको हकाररूपो वर्णः, **प्रोच्यते**=वर्ण्यते। अर्हत्पदघटको हकारोऽर्हतो रागादिहननं लक्षयति, दारपरिग्रहादिना नाऽन्यो देव ईदृश इति हृदयम्॥ ४२॥

अथाऽर्हन्नितिपदान्तस्थ नकार निर्वक्ति—

**सन्तोषेणाऽभिसम्पूर्ण प्रतिहार्याष्टकेन च।**
**ज्ञात्वा पुण्य च पापं च नकारस्तेन प्रोच्यते॥ ४३॥**

सन्तोषेणेति। **पुण्यम्**=शुभ कर्म, **पापम्**=अशुभ कर्म, **च**=द्वयं समुच्चये। **ज्ञात्वा**=विवेकेन परिच्छिद्य, इद पुण्यमिद पापमित्येवं विविच्येत्यर्थ। **सन्तोषेण**=आत्मरत्या, तृष्णोपरमेणेत्यर्थ। उपशमेनेति यावत्। **अभिसम्पूर्ण**=सम्भृत, आत्मरमणात्सर्वथा तुष्टमनोवृत्तिरित्यर्थ। असन्तोषात्परिग्रहादिप्रवृत्ते पुण्यपापाऽनुबन्धाद्भवपरम्परात्मकदुष्परिणामाऽनुषङ्ग इत्यतो विषयविरक्त उपशान्ततृष इति परमार्थः। तथा, **प्रातिहार्याऽष्टकेन**=प्रातिहार्याणा द्वा स्थ इव समवसरणस्थेऽर्हति नियतस्थितीना तथाख्याताना चैत्यपादपच्छत्रदुन्दुभ्यादीनामष्टकेना-

